

**चन्दमामा** सम्पुटः - २१ अगस्ट् - २००५ सञ्चिका - ८



# अन्तरङ्गम्


- ★ वाचकानां कृते कथास्पर्धा - परिणामः ...६
- ★ अत्रैव स्यात् पाटलसस्यम् ...७
- ★ स्वर्गः नरकः च ...१२
- ★ भारतदर्शनम् ...२५
- ★ पूजा न रक्षति दण्डात् ...२६
- ★ वार्ताविशेषः ...२८
- ★ वाचकानां कृते कथास्पर्धा ...४३
- ★ राजकुमाराः शिलास्तम्भाः च ...४४
- ★ दासीपुत्रः ...५०
- ★ नष्टम् अङ्गुलीयकम् ...५१
- ★ आर्यः - २४ ... ६४
- ★ ताजमहल् ...६७
- ★ पुटोऽयं भवताम् ...६८
- ★ चित्रशीर्षिकास्पर्धा ...७०


## एतस्य अङ्कस्य विशेषाः






भल्लूकमान्त्रिकः - २० ...१३

देवनाथस्य दिव्यशक्तयः (वेतालकथा) ...१९







हेषारवेण जितं साम्राज्यम् ...२१

विष्णुपुराणम् - २० ...५३



**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, **CHENNAI - 600 097**

E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**

**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा

'Chandamama India Limited' नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -

**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ –*
**चक्रपाणिः, बि. नागिरेड्डिः च**

# यशस्वितायै अपेक्ष्यते आत्मप्रशिक्षणम्

एवरेस्ट्पर्वतः एषु दिनेषु वार्ताविषयतां गतः अस्ति । एतस्य हिममये शिखरे किञ्चन हेलिकाप्टर्यानम् अवातरत् एषु दिनेषु । कश्चन पर्वतारोहिसहायकः पञ्चदशवारं तं पर्वतम् आरुह्य जागतिकविक्रमम् एव साधितवान् । ऐदम्प्राथम्येन काश्चन भारतीय-सैन्यीयाः महिलाः एतस्य शिखरस्य आरोहणाय प्रयासं कृतवत्यः । नेपालीयौ उभौ वधूवरौ एतस्मिन् पर्वतशिखरे विवाहितौ जातौ अपि !

चतुर्विंशतिसदस्यात्मकं चीनादेशीयं किञ्चन दलम् एतस्य शिखरस्य औन्नत्यस्य पुनर्मापनाय प्रयासम् अकरोत् । बहुभिः कृतस्य शिखरारोहणस्य कारणतः एतस्य औन्नत्यं न्यूनं जातं स्यात् किम् इति ते परिशीलयन्तः सन्ति ?

५२ वर्षेभ्यः पूर्वम् एड्मण्ड्हिलेरी तेनसिङ्गनार्गे च एतस्य शिखरे यावत् पदं न स्थापितवन्तौ आस्तां तावत् एतत् पर्वतशिखरं दुरारोहत्वेन भाव्यते स्म । किन्तु अद्य न तथा । यदि लक्ष्यसाधनाय प्रबला इच्छा, शरीरमनसोः दार्ढ्यम्, उत्तमं प्रशिक्षणं, योग्या योजना इत्यादयः भवन्ति तर्हि असाध्यं किमपि नास्ति । वैयक्तिकसिद्धिक्षेत्रे तु मनसः महत्त्वम् अधिकम् । योग-चित्तवृत्तिनिग्रहादीन् मनस्सम्बद्धान् उपायान् आश्रित्य आत्मनिग्रहं कर्तुम् अर्हति बालः अपि । मनसः निग्रहः सदा भवति प्रयत्नसाध्यः ।

अस्माकं देशः तु एतादृशानां प्रयासानाम् आश्रयभूमिः । अतः ५८ तमवर्षस्य स्वातन्त्र्यदिनाचरणावसरे वयम् आशास्महे यत् अस्मद्देशः बौद्धिकशक्तिम् आसाद्य स्वस्थाः तीक्ष्णमतीः प्रजाः निर्मेयात् इति ।

*सम्पादकः* – **विश्वम्**

Visit us at : http://www.chandamama.org

वाचकानां कृते कथास्पर्धा (जनवरी - ०५) - परिणामः

# बुद्धिमान् नाविकः



पण्डितेन बहुधा चिन्तितम् । तथापि किमपि उत्तरं न प्राप्तम् । अतः अनन्यगतिकतया तेन पराजयः अङ्गीकरणीयः एव अभवत् । सः सङ्कोचम् अनुभवन् नाविकम् उद्दिश्य - ''मया तादृशः पक्षी न दृष्टः, न वा श्रुतः । अतः अहं मम पराजयम् अङ्गीकरोमि'' इति उक्त्वा तस्मै रूप्यकद्वयं दत्तवान् । ततः सः नाविकं पुनः अवदत् - ''तादृशः पक्षी कः इति भवान् एव वदतु'' इति ।

पण्डितेन पराजयः यत् अङ्गीकृतः तस्मात् नाविकः नितरां सन्तुष्टः । सः पण्डितात् धनं स्वीकृत्य अवदत् - ''तादृशः पक्षी कः इति अहमपि न जानामि'' इति ।

तदा पण्डितः आश्चर्येण अवदत् - ''किं भवता अपि न ज्ञायते ? एवं तर्हि महावञ्चकः भवान्'' इति ।

एतत् श्रुत्वा नाविकः - ''मया वञ्चना कापि न कृता । मया यथामति किमपि पृष्टम् । यः प्रश्नः पृच्छ्यते तस्य उत्तरं प्रश्नकर्त्रा ज्ञातव्यम् एव इति नियमः तु न आसीत् खलु ? अतः मया वञ्चना तु न कृता । उत्तरं न जानामि इत्यतः अहम् अपि पराजयम् अङ्गीकरोमि । तदर्थं स्वीकरोतु एतत् एकं रूप्यकम्'' इति वदन् एकं रूप्यकं पण्डिताय दत्तवान् ।

एवं नाविकः स्वबुद्धिमत्तया पण्डितात् एकं रूप्यकं प्राप्तवान् । पण्डितः तु स्वस्य अपाण्डित्यविषये लज्जाम् अनुभवन् नौकातः अवतीर्य विना वचनं ततः निर्गतवान् ।

प्रेमसिंह चौहान्

C/o श्री मदनसिंह साटरिया बजार, होली थडा वाली गली, भीण्डर (राजस्थान)

जि. उदयपुर - ३१३६०३



# अत्रैव स्यात् पाटलसस्यम्

सोमेश्वरनामकः कश्चन ग्रामः । तत्र स्थिताः कृषिकाः सर्वे महता सन्तोषेण जीवनं यापयन्ति स्म । ग्रामे कृषिः समृद्धा आसीत् इत्येतत् एव तस्य कारणम् । यद्यत् इच्छन्ति तत्सर्वमपि क्रेतुं ते समर्थाः आसन् । सर्वेषाम् आयः उत्तमः आसीत् इत्यतः सर्वदा तेषां मुखेषु सन्तोषः दृश्यते स्म । आरोग्यसूत्राणि अपि परिपालयन्तः ते सुखेन जीवन्ति स्म ।

सोमेश्वरग्रामे स्थितः जनार्दनस्वामि-देवालयः प्रसिद्धः । दूरस्थाः अपि अत्र आगत्य देवदर्शनं कृत्वा आत्मानं धन्यं भावयन्ति स्म । गच्छता कालेन अस्य ग्रामस्य उत्तमं वातावरणं राज्ञः कर्णपथम् अगमत् । कदाचित् राजा मन्त्रिणं गङ्गभद्रम् उक्तवान् – ''मन्त्रिवर्य ! सोमेश्वरग्रामे स्थितः जनार्दन-देवालयः सहस्रात् वर्षेभ्यः पूर्वं निर्मितः । किन्तु सः ग्रामः दशभ्यः वर्षेभ्यः पूर्वम् एवं समृद्धः न आसीत् । अतः मम तु भासते यत् अस्य कारणं तत्रत्यः भगवान् न इति । अन्यत् एव किमपि कारणं स्यात् एतस्य'' इति ।

मन्त्री अपि राज्ञः अभिप्रायम् एव अनु-मोदितवान् । ततः तौ वस्तुस्थितिं ज्ञातुम् इच्छन्तौ ज्योतिषिकवेषेण सोमेश्वरग्रामं गतौ । तत्रत्यां समृद्धिं दृष्ट्वा तौ नितराम् आश्चर्य-चकितौ । ज्योतिषं वक्तुं कस्यचन गृहं गतौ तौ । तदा तस्य गृहस्य स्वामी – ''महाशयौ ! भवतोः मुखे स्थितस्य तेजसः दर्शनात् भासते यत् भवन्तौ विद्यावन्तौ, प्रतिभाशालिनौ च इति । भवतोः एषः ज्योतिषकथनप्रयासः किं व्यर्थः न ? मनुष्यः स्वप्रयत्नेनैव सर्वं साधयेत् । कदापि तेन भाग्यमात्रं न अवलम्बनीयम् । स्वसामर्थ्यानुगुणं परिश्रमः करणीयः । स्व-सामर्थ्ये यस्य विश्वासः भवति तस्य ज्योतिषेण किम् ?'' इति उक्तवान् ।

राजा तस्य वचनं श्रुत्वा आश्चर्यचकितः सन् उक्तवान् – ''देवस्य जनार्दनस्य अनुग्रहेण भवन्तः सर्वे सुखिनः । अतः भाग्यविषये अनादरः भवताम्'' इति ।



एतत् श्रुत्वा स गृहस्थः हसन् उक्तवान् – ''महोदय ! भगवान् एव अस्माकं जन्मनः कारणम्, सः एव अनेकानि सौलभ्यानि अपि अस्मभ्यम् उपकल्पितवान् इति तु सत्यम् । अस्माकंग्रामे स्थितस्य कमलनाथस्य अभि-प्रायः अस्ति यत् इतोऽपि अधिका अपेक्षा अस्माभिः न करणीया इति । तस्य वचनस्य अनुगुणं वयम् आचरामः । अतः एव अस्माकं ग्रामः एवम् उन्नतिं प्राप्तुं समर्थः अभवत् । वयं सर्वे चिन्तयामः यत् दशभ्यः वर्षेभ्यः पूर्वम् एतं कमलनाथम् अस्माकं ग्रामं प्रति सम्प्रेष्य भगवान् महान्तम् उपकारं कृतवान् इति । एकवारं कमलनाथेन सह वार्तालापं कुरुताम् । तदा सः भवतोः योग्यं कार्यं किमिति वक्ष्यति'' इति अवदत् ।

राजा मन्त्री च अस्य ग्रामस्य प्रसिद्धेः उन्नतेः च कारणं कमलनाथः एव इति ज्ञातवन्तौ । ततः तौ उभावपि कलनाथेन मिलितवन्तौ । कमलनाथः तयोः वचनानि श्रुत्वा उक्तवान् – ''महोदयौ ! ज्योतिषशास्त्रस्य महत्त्वम् अहं जानामि एव । किन्तु जनानां भविष्यकथनाय तस्य उपयोगः न उचितः । तेन लाभस्य अपेक्षया हानिः एव अधिका । वृष्टिः, प्रवाहः, चण्डमारुतः, भूकम्पः इत्यादयः ज्योतिषबलात् पूर्वमेव ज्ञातुं शक्याः । अतः तादृशानां विषये एव अस्य शास्त्रस्य उपयोगः करणीयः । अनया एव दृष्ट्या ज्योतिषं पठनीयं, पठितस्य उपयोगः अपि अनया दृष्ट्या एव स्यात् । यदि अपेक्ष्यते तर्हि अहमपि एतस्मिन् विषये साहाय्यं कर्तुं शक्नुयाम्'' इति ।

तदा तौ उभौ अपि स्वस्य वास्तविकं परिचयम् उक्त्वा आगमनकारणमपि निवेद्य कमलनाथम् उद्दिश्य – ''महोदय, राज्ञा अनेके नियमाः कर्तुं शक्याः । किन्तु भवादृशानां महानुभावानां बोधनेनैव जनेषु जागरणं भवितुम् अर्हति, न अन्यथा । अतः केचन युवकाः अस्माभिः भवत्समीपं प्रेष्यन्ते । तेषां प्रशिक्षणं भवता दातव्यम् । शिक्षणं प्राप्य ते युवकाः स्वग्रामान् गत्वा यदि जनान् बोधयेयुः तर्हि देशे सर्वत्र समृद्धिः स्यात्'' इति उक्तवन्तौ ।

कमलनाथः एतत् कार्यम् अङ्गीकृतवान् । षण्मासपर्यन्तं विंशतिः युवकाः कमलनाथेन प्रशिक्षिताः । ततः स्वग्रामं गत्वा ते तस्य विचारस्य चिन्तनस्य च प्रचारं कृतवन्तः । एकं वर्षम् अतीतम् । किन्तु कोऽपि परिणामः कस्मिंश्चिदपि ग्रामे न दृष्टः । कोऽपि तस्मिन्

विषये अभिरुचिं न दर्शितवान् ।

अनेन राज्ञि सन्देहः उत्पन्नः – 'सोमेश्वर-ग्रामस्य उन्नत्याः कारणं भगवतः महिमा एव स्यात्, न तु कमलनाथः' इति । किन्तु मन्त्री गङ्गभद्रः राज्ञः मनसि स्थितं विचारं दूरीकर्तुम् इच्छन् उक्तवान् – ''प्रभो ! कमलनाथस्य महिमा एव अत्र कारणम् उत न इति परीक्षितुम् उपायः कश्चन आश्रयितुं शक्यः । तम् अन्यं ग्रामं प्रति प्रेषयाम । तत्रापि सः यदि सफलः भवेत् तर्हि सिद्ध्यति यत् एतस्य ग्रामस्य उन्नतेः कारणं सः एव इति'' इति ।

राजा मन्त्रिणः सूचनाम् अङ्गीकृतवान् । सः कमलनाथं सूचितवान् यत् भवता रामपुरं गन्तव्यम् इति । रामपुरे आ चतुर्भ्यः वर्षेभ्यः वृष्टिः एव न आसीत् । ग्रामीणाः क्षुधया, पिपासया च कष्टम् अनुभवन्तः आसन् ।

कमलनाथः पत्न्या मीनाक्ष्या, पुत्रेण, पुत्र्या च सह रामपुरं प्राप्तवान् । ग्रामस्य परिस्थितिं दृष्ट्वा ते सर्वेऽपि साश्रुनयनाः जाताः ।

ग्रामीणाः तेषां वसतिम् एकस्मिन् कुटीरे व्यवस्थापितवन्तः ।

सूर्योदयात् पूर्वमेव कमलनाथगृहीयाः सर्वे उत्तिष्ठन्ति स्म । मीनाक्षी गृहकार्ये संलग्ना भवति स्म । कमलनाथः किञ्चित्कालं बालौ पाठयित्वा ग्रामीणैः मेलितुं गच्छति स्म । मार्गे यः मिलति तेन सह वार्तालापं कुर्वन्, ग्रामस्य परिस्थितिम् अवलोकमानः जनानां समस्यानां परिहारमपि चिन्तयति स्म । न ज्ञायते, तस्य वचसि कीदृशी शक्तिः अस्ति इति, जनाः सर्वेऽपि मन्त्रमुग्धाः इव तस्य वचनं श्रद्धया शृण्वन्तः तत् परिपालयन्ति स्म ।



एवमेव दिनानि गतानि ।

कमलनाथः जलस्थानम् अन्विष्य तत्र कूपं निर्माप्य ग्रामस्य जलसमस्यां परिहृतवान् । न्यूनेन जलेन कृषिः कथं कर्तुं शक्या इति जनान् बोधितवान् । कृषिकार्यस्य अभावे नगरं गत्वा कथं धनं सम्पादयितुं शक्यम् इत्यपि सः जनान् बोधितवान् । आरोग्यसूत्राणि ज्ञापयित्वा सः जनान् अवदत् – ''भूमौ मरुभूमिः, अरण्यं, पर्वताः इत्यादीनि वैविध्य-स्थानानि सन्ति । तथापि जनाः तु सर्वत्र अपि सुखेनैव सन्ति । एतत् एव जीवनं नाम । जीवने क्वचित् प्राकृतिकविकोपाः अपि भवन्ति । मनुष्यः तदवसरे भयग्रस्तः न भवेत् । प्रकृत्या दत्तानि सर्वाणि अपि योग्य-रीत्या उपयुज्य सः जीवेत्'' इति ।

ततः षण्मासाभ्यन्तरे कमलनाथस्य गृहम्



तदा मीनाक्षी उक्तवती – ''पूर्वं गृहस्य अस्य पृष्ठभागस्य भूमिः ऊषरा इव आसीत् । इदानीं सस्येषु अनेकानि वैविध्यमयानि पुष्पाणि हसन्ति सन्ति । किन्तु अस्मिन् उद्याने रक्तवर्णीयं पाटलपुष्पमेकं नास्ति । तादृशं पाटलसस्यं यदि लभ्येत तर्हि महान् सन्तोषः भवेत् मम । इतोऽपि अन्या कापि अपेक्षा नास्ति मम'' इति । तद्दिनात् एव सर्वे ग्रामीणाः पाटलसस्यस्य अन्वेषणे निरताः ।

अस्मिन्नेव समये राजा अपि रामपुरस्य वृद्धिं ज्ञातवान् । सः रामपुरस्य ग्रामप्रमुखाणां सभाम् आयोजितवान् । ग्रामप्रमुखाः आगत्य 'ग्रामस्य स्थितिः कथम् उत्तमा अभवत्' इति उक्त्वा 'तस्य सर्वस्य मूलं कारणं कमलनाथः एव' इति विवरणं दत्तवन्तः ।

तदा मन्त्री गङ्गभद्रः तान् उक्तवान् – ''इतः परं कमलनाथस्य अनुपस्थितौ अपि भवतां ग्रामः वृद्धिं प्राप्नुयात् एव । अतः महाराजः तं कमलनाथं योगवरग्रामं प्रति प्रेषयितुम् इच्छति'' इति ।

एतत् श्रुत्वा ग्रामीणाः निर्वचनाः अभवन् । ततः ते परस्परं सम्मन्त्र्य राजानम् उक्तवन्तः –''प्रभो ! कमलनाथस्य पत्नी रक्तवर्णस्य पाटलपुष्पस्य सस्यम् इष्टवती । अस्माभिः तस्य आनयनम् अङ्गीकृतम् अस्ति अपि । तत् सस्यम् एतावता कुत्रापि न प्राप्तम् एव । तत् यावत् प्राप्येत तावत् कमलनाथस्य अन्यत्र प्रेषणं मास्तु इति विज्ञापनम् अस्माकम्'' इति ।

राजा तेषां वचनं योग्यम् अचिन्तयत् । किन्तु ततः षट् मासाः अतीताः चेदपि ग्रामीणैः तत् सस्यं न लब्धम् एव । एतं विषयं ज्ञातवान्

उत्तमम् अभवत् । ग्रामेऽपि समृद्धिः दृष्टिगोचरतां गता । ग्रामीणाः सर्वे अस्य परिवर्तनस्य कारणं कमलनाथः एव इति विचिन्त्य तस्मै किमपि पारितोषिकं दातुम् इष्टवन्तः । तत् श्रुत्वा कमलनाथः हसन् उक्तवान् – ''भवन्तः सर्वे माम् आदरेण दृष्टवन्तः, मम सूचनाः सर्वाः पालितवन्तः च । एतस्मादपि श्रेष्ठम् अन्यत् पारितोषिकं किं भवितुम् अर्हति ?'' इति ।

तदा ग्रामीणाः मीनाक्षीम् उद्दिश्य उक्तवन्तः – ''मातः ! भवती अस्मिन् कुटीरे निवसन्ती एतदेव स्वर्गतुल्यं कृतवती । भवत्याः पतिदेवः अस्माकं मार्गदर्शकः । किन्तु ग्रामस्य समृद्धौ भवत्याः दायित्वमपि अधिकम् एव । अतः भवती यत् इच्छति तत् वदतु । तत् आनीय दास्यामः'' इति ।

मन्त्री राजानम् अपृच्छत् –''प्रभो ! एतावत्-पर्यन्तं ग्रामीणैः तत् सस्यं न प्राप्तम् । अतः वयमपि एतदर्थं प्रयत्नं कुर्याम किम् ?'' इति ।

राजा एतं प्रस्तावम् अङ्गीकृतवान् । ततः राजभटैः महान् प्रयत्नः कृतः । तदा पार्श्वस्थे देशे एकस्मिन् लघुग्रामे तादृशं सस्यं लब्धम् ।

ततः मन्त्रिणा सह रामपुरं गतः राजा कमलनाथाय तत् सस्यं समर्प्य उक्तवान् – ''भवतः पत्न्याः इच्छा पूर्णा अभवत् । इतः परं भवान् योगवरग्रामं गत्वा तस्य उन्नत्यै परिश्रमं करोतु'' इति ।

तदा तत्रैव स्थिता मीनाक्षी राजानम् उक्तवती – ''प्रभो ! अस्य गृहस्य पृष्ठभागे तत् सस्यम् आरोप्य तस्य रक्षणं करणीयम्, तत् च संवर्धितं सत् कलिकां जनयेत् इति मम इच्छा । ततः एकं पुष्पं पुष्पितं चेत् अहं सन्तुष्टा भवेयम् । तदनन्तरं भवतः इच्छानुगुणं यत्र कुत्रापि गन्तुं वयं सिद्धाः'' इति ।

तस्याः वचनानि श्रुत्वा राजा उक्तवान् – ''भवन्तः इदानीम् एतं ग्रामं त्यजन्ति । अतः एतत् सस्यम् अपि आत्मना सह योगवरग्रामं प्रति नयन्तु नाम'' इति ।

तदा मीनाक्षी उक्तवती – ''अस्य गृहस्य उद्याने एव तस्य आरोपणं भवेत् इति उद्देशेन मया एतत् सस्यं याचितम् । अतः एतत् सस्यम् अत्रैव वर्धेत'' इति ।

तदा राजा सविनयं कमलनाथं तस्य पत्नीं च नमस्कुर्वन् उक्तवान् – ''मातः, भवत्सु कः विशेषः अस्ति इति मया इदानीं ज्ञातम् । यस्मिन् गृहे भवतां वासः तत् गृहम् स्वकीयम् इति भवन्तः भावयन्ति । यैः सह वासः क्रियते, तान् स्वकीयान् मत्वा तेषां विकासाय परिश्रमः क्रियते । अत एव योग्यं फलम् उत्पद्यते भवतां बोधनेन । बोधनेनैव कोऽपि महात्मा यदि भवेत् तर्हि सर्वे शास्त्रज्ञाः अपि महान्तः भवेयुः । भवादृशाः जनाः एव उत्तमं फलं साधयन्ति । अतः भवत्सु मम काचन प्रार्थना यत् भवन्तः यत्र इच्छन्ति तत्र गत्वा वसन्तु, सर्वत्र जनान् बोधयन्तः उत्तमाः मार्गदर्शकाः सन्तः तिष्ठन्तु इति'' इति ।

ततः प्रभृति कमलनाथस्य सूचनाः, तस्य कीर्तिः च न केवलं स्वदेशीयान् जनान्, अपि तु अन्यदेशीयान् अपि जनान् प्रभावितान् अकुर्वन् ।



# स्वर्गः नरकः च

कस्मिंश्चित् वने जीर्णे देवालये कश्चन मुनिः ध्याने मग्नः आसीत् । कदाचित् तत्र आगतः कश्चन सैनिकः एतं मुनिं दृष्ट्वा अश्वात् अवतीर्य मुनेः पुरतः स्थितः । कश्चन समयः गतः । मुनिः ध्यानात् बहिः आगतः । तदा तत्र स्थितः सैनिकः सविनयं तं प्रणम्य उक्तवान् – ''आर्य ! बहुभ्यः दिनेभ्यः कश्चन सन्देहः मां बाधते'' इति ।

''तं पृच्छतु तावत्'' इति मुनिः शान्तमनस्कः सन् उक्तवान् ।

''स्वर्गनरकौ स्तः इति जनैः तु कथ्यते । किन्तु तयोः अस्तित्वे मम संशयः'' इति उक्तवान् सैनिकः ।

तदा मुनिः – ''भवान् कः ? किं करोति ?'' इति प्रीत्या पृष्टवान् ।

तदा सः सैनिकः गर्वेण – ''अहम् अस्य देशस्य सेनाधिपतिः'' इति उक्तवान् ।

''भवादृशं मूर्खं कः सेनाधिपतिं कृतवान् ?'' इति कोपेन पृष्टं मुनिना ।

मुनेः वचनं सैनिके कोपम् अजनयत् । सः झटिति कोशात् खड्गं निष्कासितवान् ।

तदा मुनिः हसन् – ''पश्यतु, इदानीं नरकद्वारम् उद्घाटितम्'' इति उक्तवान् ।

मुनेः वचनं श्रुत्वा सेनाधिपतिः क्षणं यावत् दिग्भ्रान्तः जातः । स्वस्य खड्गं कोशे स्थापयन् सः उक्तवान् – ''मुनिवर ! क्षन्तव्यः अयं जनः'' इति ।

''इदानीं स्वर्गद्वारम् उद्घाटितम् । कामक्रोधमोहादयः दुर्गुणाः एव नरकस्थानानि । येषु च शान्तिः, करुणा, दया, सहना इत्यादयः सद्गुणाः भवन्ति तेषां हृदयमेव स्वर्गः । स्वर्गः नरकः च कुत्रापि अन्तरिक्षे न स्तः । अपि तु अस्माकं हृदये एव भवतः'' इति उक्तवान् मुनिः ।

''मुनिवर्य ! ज्ञातं मया । अनुगृहीतः अस्मि'' इति उक्त्वा सैनिकः पुनः मुनिं नमस्कृत्य ततः प्रस्थितः । तस्य मुखभावस्य दर्शनात् ज्ञायते स्म यत् एतस्य मनसि कापि शङ्का न अवशिष्टा इति ।





# भल्लूकमान्त्रिकः

## २०

*[मन्त्रदण्डस्य प्राप्तेः अनन्तरं विरागी तच्छिष्यौ च तस्य प्रभावस्य परीक्षणाय तेन भूमिं प्रहृतवन्तः । तस्मात् कश्चन सुरङ्गः दृष्टिगोचरतां गतः । एतस्य अन्तः सम्पत्तिः स्यात् इति चिन्तयन्तः विरागी तच्छिष्यौ च सुरङ्गमार्गेण अग्रे गतवन्तः । अत्रान्तरे कासारतीरं प्राप्तवान् वधकभल्लूकः परशुं गृहीत्वा व्याधस्य संहाराय अग्रे आगतः । एतदनन्तरम् ...]*

वधकभल्लूकस्य घोराम् आकृतिं, तस्य हस्ते स्थितं तीक्ष्णं परशुं च दृष्ट्वा सः व्याधः अव-गतवान् यत् इतः पलायनाय क्रियमाणः प्रयासः प्रायः व्यर्थः एव भवेत् इति । अतः सः आपादमस्तकं कम्पमानः करौ योजयित्वा अवदत् – "महाशय ! गतेषु सप्तसु दिनेषु अहम् एतस्मिन् अरण्ये विचित्राकारान् जनान्, कञ्चित् घोरं राक्षसं च बहुधा दृष्टवान् अस्मि । किन्तु मया तेषु केनचित् सह अपि वार्तालापः न कृतः । मया मायामर्कटः अपि न दृष्टः । किन्तु रक्तवस्त्रधारिणा जटाधारिणा शङ्खं वादयता 'अयि, शिष्य ! मायामर्कट !' इति यत् असकृत् उक्तं तत् श्रुतम् अस्ति मया" इति ।

व्याधस्य मुखात् एतानि वचनानि श्रुत्वा वधकभल्लूकः आश्चर्येण स्तब्धः जातः । सः स्वस्य परशुम् अधः कुर्वन् अवदत् – "अये व्याध ! भवता विशिष्टा काचित् वार्ता श्राव्यमाणा अस्ति । एतस्याः पृष्ठभूमिकायां स्थितं रहस्यं मम स्वामी कालीवर्मा प्रायः



जानाति इति मन्ये । भवान् पलायनचिन्तनं न करोतु । भवतः प्राणानां कोऽपि अपायः न भविष्यति'' इति ।

तदा भिल्लयुवकः अवदत् - ''भल्लूकवर्य ! किम् एतस्य व्याधस्य वचनं विश्वासार्हं स्यात् ? कश्चन मान्त्रिकवर्यः, राक्षसः उग्रदण्डः च अस्माभिः सह स्तः एव । एवं स्थिते अपरस्य मान्त्रिकस्य राक्षसस्य च अरण्ये स्थितिः किं विश्वासार्हा स्यात् ?'' इति ।

''माम् अपि एषः एव प्रश्नः बाधते । भल्लूकमान्त्रिकेण सह स्पर्धां कर्तुम् अपरः कश्चित् मान्त्रिकः उपस्थितः स्यात् अपि । तदास्तां तावत्'' इति उक्त्वा वधकभल्लूकः व्याधम् उद्दिश्य अवदत् - ''अये ! भवता कपटस्य विरागिणः सुरङ्गप्रवेशः कथ्यमानः आसीत् खलु ? तं विषयं विस्तरेण वदतु तावत्'' इति ।

एतदनन्तरं सः व्याधः वधकभल्लूकं तस्य सुरङ्गस्य समीपं नीतवान्, यं विरागी शिष्याभ्यां सह प्रविष्टवान् आसीत् । मन्त्रदण्डस्य साहाय्येन तैः कृतमपि निवेदितवान् सः ।

सर्वं श्रुत्वा एतं वृत्तान्तं कालीवर्माणं भल्लूकमान्त्रिकं च निवेदयितुं यावत् वधकभल्लूकः ततः निर्गन्तुम् उद्युक्तः तावता कालीवर्मा एव अश्वम् आरूढवान् सन् तत्र उपस्थितः । सः वधकभल्लूकम् अवदत् - ''एषः प्रदेशः शिबिरनिर्माणाय नितराम् अनुकूलकरः इति भाति'' इति ।

वधकभल्लूकः कालीवर्मणः समीपं गत्वा अवदत् - ''कालीवर्मवर्य ! शिबिरनिर्माणविषयम् अनन्तरं चिन्तयाम । आदौ भवता एतस्य व्याधस्य कथनस्य विषये अवधातव्यम् । एषः विलक्षणां वार्तां श्रावयन् अस्ति'' इति ।

कालीवर्मणा पृष्टः व्याधः अरण्ये शङ्खमान्त्रिकः, राक्षसः, विरागी, उभौ शिष्यौ च दृष्टाः यत् तत्सर्वं विस्तरेण श्रावितवान् । मन्त्रदण्डस्य साहाय्येन भूमौ स्थितं सुरङ्गं प्रति मार्गं प्रकल्प्य कथं विरागिणा शिष्याभ्यां सह गतम् इत्यपि विवृतवान् सः ।

अनन्तरक्षणे एव कालीवर्मा सुरङ्गद्वारसमीपं गत्वा अवनम्य अन्तः दृष्टिं प्रसार्य सर्वं परिशील्य जागरूकतया तस्य सुरङ्गस्य अन्तः अगच्छत् । सोपानमार्गम् अतिक्रम्य यदा अग्रे गतं तदा प्रकाशः तेन दृष्टः । अग्रे गच्छतः विरागितच्छिष्याः चापि दृष्टाः ।

सः विना शब्दं प्रत्यागत्य वधकभल्लूकम्

असूचयत् - ''भोः, वधकभल्लूक ! वन्यतरुणः अत्र उपविश्य रक्षणकार्यं करोतु । भवान् वेगेन भल्लूकमान्त्रिकसमीपं गत्वा अत्र प्रवर्तमानं सर्वं निवेद्य तम् अत्र आनयतु । अहं पुनरपि सुरङ्गं प्रविश्य विरागिणः हस्तात् मन्त्रदण्डं प्राप्तुं प्रयासं करिष्यामि'' इति ।

ततः निर्गमनाय त्रिचतुराणि पदानि स्थापितवान् वधकभल्लूकः गमनं स्थगयित्वा - ''कालीवर्मवर्य ! विरागिणः हस्ते भल्लूकमान्त्रिकीयः मन्त्रदण्डः अस्ति । विरागी तद्बलेन किमपि कर्तुम् अपि अर्हति इति न विस्मर्तव्यं भवता'' इति अवदत् ।



कालीवर्मा खड्गं हस्तेन गृहीत्वा सुरङ्गद्वारदिशि पदानि स्थापयन् अवदत् - ''वधकभल्लूक ! मम एतस्य खड्गस्य शक्तिः भवता न ज्ञायते । अपारशक्तिशाली अस्ति एषः । सामर्थ्येन मन्त्रदण्डम् अपि अतिशेते एषः । मम पितुः हस्ते स्थितः एषः खड्गः अद्यतनस्य राज्ञः जितकेतोः पितुः बहून् शत्रून् संहृतवान् आसीत् । अचिरात् एव एषः खड्गः राज्ञः जितकेतोः शिरः अपि कर्तयिष्यति'' इति ।

एतदनन्तरं भिल्लयुवकः व्याधस्य समीपं गत्वा अवदत् - ''भवान् तु व्याधकुलीयः, अहमस्मि भिल्लकुले जातः । उदरपूरणाय अस्मादृशैः समग्रे अरण्ये सञ्चारः करणीयः भवति । महान् परिश्रमः कृतः चेदपि फलं शून्यम् । एतस्मात् अपि बलवतः आश्रयं प्राप्य उदरपूरणं वरम् । चन्द्रशिलायाः राजा जितकेतुः इतोऽपि बहूनि दिनानि यावत् स्वस्य सिंहासनाधिकारं रक्षितुं न शक्नुयात् । अतः जयशीलः पक्षः आश्रितः चेत् राजास्थाने कोऽपि उद्योगः प्राप्येत निश्चयेन'' इति ।

एतत् श्रुत्वा सः व्याधः आशापूर्णया दृष्ट्या भिल्लयुवकं पश्यन् अपृच्छत् - ''मित्र ! भवता बहवः अंशाः ज्ञापिताः । दुष्टम् असमर्थं जितकेतुराजं सिंहासनात् अवतारयितुं समर्थः सः कः ?'' इति ।

भिल्लयुवकः सुरङ्गस्य अन्तः गच्छन्तं कालीवर्माणं दर्शयन् तम् अवदत् - ''तस्य महाशयस्य नाम कालीवर्मा इति । राजा जितकेतुः तस्य अपमानाय प्रयत्नम् अकरोत् । तस्य शिरश्छेदाय अपि प्रायतत । एतस्मात् क्रुद्धः कालीवर्मा तं सहर्तुं सङ्कल्पं कृतवान् अस्ति'' इति ।

''मित्र ! अहमपि भवता सह स्थातुम् इच्छामि'' इति वदन् सः व्याधः उत्साहेन भिल्लतरुणस्य समीपं गत्वा अतिष्ठत् ।



सुरङ्गमार्गं प्रविष्टवान् कालीवर्मा जानुपर्यन्ते जले किञ्चिद्दूरं गत्वा दूरे दृश्यमानान् विरागि-तच्छिष्यान् जागरयन् अवदत् – ''अयि भोः, स्थीयताम्'' इति ।

एतत् आदेशपूर्णं वचनं श्रुत्वा विरागी आश्चर्येण स्तब्धः सन् झटिति मुखं परिवर्त्य अपश्यत् । शिष्यः कश्चित् भीत्या कम्पमानः अवदत् – ''गुरुवर्य ! निधिरक्षकः यक्षः एव उपस्थितः इति भाति'' इति ।

गुरुः विरागी आश्चर्यचकितः सन् मौनेन अतिष्ठत् । ततः कालीवर्माणं तीक्ष्णदृष्ट्या दृष्ट्वा सः शिष्यौ अवदत् – ''अयि शिष्यौ ! अस्माभिः भेतव्यं नास्ति सर्वथा । यः आगच्छन् अस्ति सः यक्षः इव न भाति । मया गुरोः मुखात् श्रुतं यत् ते कृशकायाः भवन्ति, तेषां कण्ठस्वरश्च दुर्बलः भवति इति । किन्तु एतस्य कण्ठस्वरः तु घण्टानादः इव गम्भीरः । आजानुबाहुः अपि अस्ति अयम् । अतः स्पष्टं यत् एषः मानवः कश्चन इति । मन्त्रदण्डस्य साहाय्येन वयम् एतं यमलोकं प्रति प्रेषयाम'' इति ।

विरागिणः वचनस्य समाप्तितः पूर्वम् एव कालीवर्मा तेषां समीपम् आगत्य – ''भवताम् अन्तरङ्गं जानामि अहम् । भवद्भिः चोरितात् मन्त्रदण्डात् अपि मम खड्गः एव समर्थतरः । किं भवन्तः मम खड्गस्य सामर्थ्यं द्रष्टुम् इच्छन्ति ?'' इति वदन् स्वस्य हस्ते स्थितं खड्गं प्रादर्शयत् ।

दर्शनमात्रेण एव खड्गस्य तीक्ष्णताम् अवगतवन्तौ शिष्यौ विरागिणम् अवदताम् – ''गुरुवर्य ! अचिरात् एव मन्त्रजपेन एतं भस्मसात् करोतु तावत्'' इति ।

विरागी भयेन कम्पमानः एव मन्त्रदण्डम् उन्नीय मन्त्रजपं कृतवान् । किन्तु एतस्मात् किमपि फलं न सिद्धम् । तावता कालीवर्मा विरागिणः समीपं गत्वा खड्गाग्रेण तदीयम् उरः स्पृशन् – ''अये विरागिन् ! एतस्य मन्त्रदण्डस्य स्वामी अहमस्मि । भवान् एतत् मदधीनं कुर्यात्, उत अहं मम खड्गस्य अग्रेण भवतः उरः विदारयेयम् ?'' इति अपृच्छत् ।

मन्त्रदण्डः अर्पणीयः उत न इति विषये सन्दिहानः आसीत् विरागी । तावता तदीयौ शिष्यौ अवदताम् – ''गुरुवर्य ! मन्त्रदण्डं तस्मै अर्पयतु तावत्'' इति ।

''भवद्भ्यां युक्तम् एव उक्तम्'' इति वदन् कृत्रिमगम्भीरतां प्रदर्शयन् विरागी कालीवर्मणे मन्त्रदण्डं समर्प्य अवदत् – ''अयि वीरयुवक !

अहं भवतः साहसं पराक्रमं च दृष्ट्वा नितरां सन्तुष्टः अस्मि । भवान् एतं मन्त्रदण्डं नीत्वा जितकेतवे समर्प्य तस्य दत्तकपुत्रीं परिणीय शतं वर्षाणि सुखम् अनुभवतु, चन्द्रशिलानगरं योग्येन क्रमेण पालयतु च'' इति ।

हसन् एव कालीवर्मा मन्त्रदण्डं स्वीकृतवान् । इदानीम् अग्रे गन्तव्यम् उत पृष्ठतः इति यावत् सः चिन्तयन् आसीत् तावता विरागी अवदत् – ''वीरवर ! यः निधिः प्राप्येत तस्य कश्चन भागः अस्माभिः अपि प्राप्येत खलु ? अस्मभ्यं दानं न्याय्यं भवेत्'' इति ।

विरागिणा किम् उक्तम् इति कालीवर्मणा आदौ न ज्ञातम् एव । क्षणकालं विचिन्त्य विरागिणः कथनस्य तात्पर्यम् अवगत्य सः अवदत् – ''अयि भोः, सुरङ्गे निधिः प्राप्येत इति चिन्तनं भ्रान्तिमूलम् । तथापि अत्र सुवर्णरजतादिकं यदि प्राप्येत तर्हि तस्य नयने न कोऽपि आक्षेपः मम । किं भवन्तः मया सह सुरङ्गे अग्रे आगच्छेयुः ?'' इति ।

विरागी तच्छिष्यौ च सहर्षम् एतं प्रस्तावम् अङ्गीकृतवन्तः । ते तं सहर्षम् अवदन् – ''वीरवर ! वयं भवता सह आगन्तुं सज्जाः एव । भवतः अनुयायिनः वयम्'' इति ।

ततः ते प्रकाशमयं प्रदेशं प्रति गतवन्तः । सुरङ्गमार्गः तत्रैव समाप्तः आसीत् । उपरि शिलाफलकं किञ्चन दृश्यते स्म । तस्य पार्श्वभागतः प्रकाशकिरणाः आगच्छन्तः आसन् ।

कालीवर्मा विरागिप्रभृतीन् अवदत् – ''वयं सर्वे सम्भूय यदि एतत् शिलाफलकम् अपसारयितुं शक्नुयाम तर्हि ज्ञायेत यत् अस्माभिः राज्ञः दुर्गस्य कः भागः प्राप्तः



इति । अतः सर्वे साहाय्यहस्तं प्रसारयन्तु तावत्'' इति ।

ततः सर्वे सम्भूय तत् शिलाफलकम् अपसारितवन्तः । तस्मात् महान् सूर्यप्रकाशः सुरङ्गे दृष्टः । शिलाफलकस्य उपरि स्थापितानि कानिचन पुष्पसस्यानि अधः पतितानि । कालीवर्मा उपरि गत्वा सर्वासु दिक्षु दृष्टिं प्रसारितवान् । तेन सः अवगतवान् यत् वयं राजोद्यानं प्राप्तवन्तः स्मः इति ।

तस्य सङ्केतम् अनुसृत्य उपरि आगताः विरागिप्रभृतयः उद्यानसौन्दर्यं दृष्ट्वा अवदन् – ''अहो, अपूर्वं सौन्दर्यम् एतस्य ! एतत् राजोद्यानम् इव भासते'' इति ।

'मन्दस्वरेण सम्भाषणं क्रियताम्' इति सूचयित्वा कालीवर्मा मन्दस्वरेण एव तान् अवदत् – ''वयम् इदानीम् अपायबहुलं स्थलं

प्राप्तवन्तः स्मः । मम तु प्राणापायभीतिः नास्ति । यदि कश्चित् मां स्प्रष्टुं प्रयासं कुर्यात् तर्हि अहं तं यमसदनं प्रेषयेयम् । किन्तु अपाय-स्थितौ भवन्तः किं वा करिष्यन्ति ?'' इति ।

तदा विरागी कम्पमानस्वरेण अवदत् - ''श्रीमन् ! भवतः यादृशं धैर्य तादृशं धैर्यम् अस्माकं नास्ति । सुरङ्गे निधिः नास्ति इति तु स्पष्टम् । अतः यदि भवतः अनुज्ञा स्यात् तर्हि वयम् इतः निर्गच्छेम'' इति ।

यावत् तेषां वार्तालापः एवं प्रचलन् आसीत् तावता मायामर्कटेन सह सम्भाषमाणः राजा जितकेतुः तत्र उपस्थितः । कालीवर्मा झटिति गुल्मस्य पृष्ठतः तिष्ठन् मन्दस्वरेण - ''भवन्तः भीताः मा भवन्तु । प्राणापायः तु कोऽपि न भविष्यति । यदि राजा आगमनकारणं पृच्छेत् तर्हि भवन्तः वदन्तु यत् कस्यचित् वणिजः सकाशे मन्त्रदण्डः दृष्टः, तां वार्तां निवेदयितुम् अस्माभिः अत्र आगतम् इति । अग्रे किं भविष्यति इति पश्याम तावत्'' इति ।

यावत् कालीवर्मा एवं वदन् आसीत् तावता दूरतः शङ्खनादः कश्चन श्रुतः । एतं श्रुत्वा नितराम् आनन्दितः मायामर्कटः वृक्षशाखाम् आरुह्य स्थित्वा - ''गुरुवर्य ! भवान् दुर्गात् बहिः स्थित्वा शङ्खनादं करोति, उत अन्तः स्थित्वा ?'' इति उच्चस्वरेण अपृच्छत् ।

अनन्तरक्षणे शङ्खनादः स्थगितः जातः । मायामर्कटः निराशः सन् वृक्षशाखातः अव-तरणाय उद्युक्तः । तावता एव तेन विरागी तच्छिष्यौ च दृष्टाः ।

तान् दृष्ट्वा नितराम् असन्तुष्टः मायामर्कटः राजनं जितकेतुम् अवदत् - ''महाराज ! एतत् राजोद्यानम्, उत विरागिणां वासस्थानम् ? पुष्पसस्यानां मध्ये स्थिताः एते विरागिणः अचिरात् एव कारागारे स्थापनीयाः'' इति ।

राजा जितकेतुः झटिति करताडनेन राज-भटान् आहूय विरागिणः समीपं गत्वा क्रोधेन अपृच्छत् - ''के भवन्तः ? राजोद्यानस्य प्रवेशाय केन अनुमतिः दत्ता ?'' इति ।

एतत् श्रुत्वा भीतिं प्रकटयन् विरागी हस्तौ उन्नीय - ''मन्त्रदण्डः, श्यामगुप्तस्य .., मन्त्रदण्डः, श्यामगुप्तस्य..'' इति अस्पष्ट-वचनानि अवदत् । - *(अनुवर्तते)*



# वेताल-कथा

## देवनाथस्य दिव्यशक्तयः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरूढवान् । शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् च । ततः सः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! घोरे श्मशानमार्गे निरन्तरं प्रयासं कुर्वतः भवतः दर्शनात् सर्वोऽपि जनः दयावान् भवेत् एव । महतः लक्ष्यस्य साधनाय एव स्यात् अयं प्रयासः । किन्तु मम प्रश्नः – यथा उद्देशः तथैव भवतः मार्गः अपि किं प्रशस्तः अस्ति इति । मार्गः प्रशस्तः चेदेव लक्ष्यं सेत्स्यति । पूर्वं देवनाथः नाम कश्चन आसीत् । धर्मसूत्राणि जानन् अपि सः यं निर्णयं कृतवान्



सः सर्वथा असङ्गतः आसीत् । तस्मात् तस्य परिणामः अपि अशुभः एव अभवत् । भवन्तं जागरयितुं, भवतः मार्गायासस्य परिहाराय च तदीयां कथाम् अहम् इदानीं विस्तरेण श्रावयामि । तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

समुद्रतीरे शृङ्गवरं नाम कश्चन ग्रामः आसीत् । ततः अनतिदूरे स्थिते अरण्ये देवनाथः नाम कश्चन योगी आश्रमं निर्माय वसति स्म । आवश्यकतायां सत्यां सः ग्रामजनानां साहाय्यं करोति स्म । जनाः वदन्ति स्म यत् सः योगी बह्वीनां दिव्यशक्तीनां स्वामी अस्ति इति ।

शृङ्गवरग्रामपरिसरे वृष्टिः काले काले भवति स्म । तस्मात् तत्रत्यैः उत्तमा फलसमृद्धिः प्राप्यते स्म । विशेषपरिश्रमं विना एव फलं प्राप्यते इत्यतः जनाः सन्तुष्टाः आसन् ।

कदाचित् बलराजः नाम कश्चित् स्वार्थी तस्य ग्रामस्य अधिकारी जातः । सः धनार्जनपरः । धनार्जनाय सः किमपि कार्यं कर्तुं सज्जः एव । धनसम्पादनेच्छया तेन ग्रामे कश्चन सुरापणः आरब्धः ।

आदौ जनाः विरलतया एव तत्र आगताः । किन्तु गच्छता कालेन तत्र बहूनां जनानाम् आगमनम् आरब्धम् । दिनेषु गतेषु, बलराजेन ग्रामे द्यूतकेन्द्रम् अपि उद्घाटितम् । एतस्मात् अल्पे एव काले ग्रामस्य तरुणाः दुरभ्यासस्य दासाः जाताः ।

एतत् असहमानाः ग्रामज्येष्ठाः केचन बलराजम् आक्षिप्तवन्तः । तदा बलराजः स्वस्य व्यवहारं समर्थयन् तान् अवदत् - ''कालः परिवर्तते । तदनुगुणम् अस्माभिः अपि परिवर्तनं प्राप्तव्यम् । बहुभिः ग्रामीणैः अपेक्षा कृता इत्यतः मया एषा व्यवस्था कृता'' इति ।

बलराजस्य व्यवहारेण असन्तुष्टेषु कृषिकेषु गिरिराजः अपि अन्यतमः आसीत् । मालती तस्य पत्नी । सहदेवरमानाथौ तस्य पुत्रौ । ज्येष्ठः पुत्रः सहदेवः उत्तमस्वभाववान् । ग्रामस्य सुशीलाः तरुणाः सर्वे तस्मिन् स्निह्यन्ति स्म । द्वितीयः पुत्रः रमानाथः अलसः । श्रमम् अनिच्छतां तरुणानां नायकः आसीत् सः ।

गिरिराजः मालती च रमानाथविषये सदा महतीं चिन्तां कुरुतः स्म ।

सहदेवः तौ समाश्वासयन् वदति स्म - ''स तु अल्पवयस्कः एतावता अपि । तस्य वर्धनभारम् अहं निर्वक्ष्यामि । अलं चिन्तया'' इति ।

सहदेवः मित्राणां साहाय्येन हरिकथादीनां व्यवस्थां करोति स्म । मदिरापानतः कीदृशाः घोराः दुष्परिणामाः भवन्ति इति जनान् अवगमयितुं प्रयासं करोति स्म । नाटकादीनां द्वारा विविधाः घटनाः उदाहृत्य जनान् बोधयति स्म सः ।

अग्रजस्य सहदेवस्य एतानि कार्याणि रमानाथाय न रोचन्ते स्म । सः एतद्विषये मित्रैः सह चर्चां कृतवान् । तदा ते सुहृदः उक्तवन्तः - ''भवतः अग्रजः ग्रामे उत्तमां ख्यातिं सम्पादितवान् अस्ति । तद्विरुद्धं यदि वयं किमपि वदेम कुर्याम वा तर्हि जनाः अस्मद्विषये एव असन्तुष्टाः भवेयुः । एतद्विषये भवतः साहाय्यं कर्तुम् अर्हः ग्रामाधिकारी बलराजः एकः एव'' इति ।

बलराजः अपि सहदेवस्य प्रचारं स्थगयितुं मार्गं चिन्तयन् आसीत् । यदा रमानाथः मित्रैः सह तं द्रष्टुम् आगतः तदा सः तान् अवदत् - ''कण्टकं कण्टकेन यथा अपनीयते तथा वज्रं वज्रेण एव छेत्तव्यम् । सहदेवस्य सद्व्यवहार-प्रवृत्तिम् एव उपयुज्य ग्रामीणाः तस्मिन् अनादरवन्तः यथा स्युः तथा अस्माभिः करणीयम्'' इति । ततः तेन एतदर्थं कश्चन उपायः अपि सूचितः ।

रमानाथस्य सुहृत् कश्चन मुनिवेषेण सहदेवसमीपं गत्वा अवदत् - ''भवत्कुटुम्ब-जनाः रमानाथे विशेषप्रीतिमन्तः इति मया



श्रुतम् । रमानाथः महालसः, व्यर्थं कालं यापयति च इत्यपि मया ज्ञायते । तस्य परिष्काराय भवता एकं साहसकार्यं करणीयम् । किं भवान् तदर्थं सज्जः ?'' इति ।

एतत् श्रुत्वा सहदेवः झटिति स्वस्य सहमतिं सूचितवान् ।

''अद्य रात्रौ भवता एकाकितया राममन्दिरं प्रति गन्तव्यम् । गर्भगृहे मुकुटधारिणः श्रीरामस्य मूर्तिः अस्ति । मूर्तेः शिरसि स्थितं मुकुटम् आनीय अनुजस्य शिरसि किञ्चित्-कालं स्थापनीयम् । अनन्तरं मुकुटं प्रत्यानीय यथास्थानं स्थापनीयम् । एतत्सर्वं रहसि प्रवर्तेत । एवं करणेन भवतः अनुजः रामचन्द्रः इव गुणसम्पन्नः भविष्यति'' इति अवदत् सः मुनिः ।

सहदेवः तस्य कपटसंन्यासिनः वचने



विश्वासं कृतवान् । रात्रौ राममन्दिरं प्रति गतं तेन । बलराजस्य योजनायाः अनुगुणं मन्दिरस्य द्वारम् उद्घाटितम् एव आसीत् ।

'भगवान् मम साहाय्यं कुर्वन् अस्ति' इति चिन्तयन् सहदेवः गर्भगृहं प्रविश्य मूर्तिं प्रणम्य मुकुटं गृहीतवान् ।

तावता ग्रामाधिकारी बलराजः, रमानाथस्य सुहृदः च तत्र आगताः । मुकुटहस्तं सहदेवं ते गृहीतवन्तः ।

किमर्थम् एतत् क्रियते इति पृष्टः सहदेवः अवदत् - ''सर्वं मम दौर्भाग्यस्य फलम्'' इति ।

अनन्तरदिने बलराजेन मन्दिरे एव ग्रामसभा आयोजिता । बलराजः सहदेवं दोषिणं निर्णीय पञ्चाशत् कशाप्रहारान् दण्डत्वेन विहितवान् ।

एतां वार्तां ज्ञातवती सहदेवस्य माता मालती तत्र आगत्य - ''वत्स ! भवान् तु नितरां सज्जनः । निन्द्यं कार्यं कदापि न क्रियेत एव भवता । भगवतः मुकुटं स्वीकृतं यत् तस्य विशेषकारणं किमपि स्यात् । तत् कारणं किम् ? भवतः कष्टम् अहं द्रष्टुं न शक्नोमि । कृपया वास्तविकं कारणं वदतु'' इति रुदती अवदत् ।

तदा सहदेवः शान्तेन एव स्वरेण - ''अम्ब ! भगवतः मुकुटं मया किमर्थं स्वीकृतम् इति यदि उच्येत तर्हि ग्रामस्य अमङ्गलं सम्भवेत् । अतः अहं किमपि न वदामि'' इति ।

एतत् श्रुत्वा बलराजः हसन् - ''एतादृशैः मधुरैः वचनैः वञ्चनेन अलम् । गोमुखव्याघ्रः अस्ति भवान्'' इति उक्त्वा कञ्चित् भटम् उद्दिश्य - ''दण्डविधानम् अचिरात् एव व्यवहारपथम् आनीयताम्'' इति वदन् तस्मै कशां दत्तवान् ।

तदा मालती अग्रे आगत्य सहदेवस्य पुरतः स्थित्वा - ''मम पुत्रः यस्य ग्रामस्य मङ्गलं चिन्तयन् अस्ति सः एव ग्रामः तस्य दण्डनं कर्तुम् उद्युक्तः अस्ति । एतस्मात् ग्रामस्य महत् अमङ्गलं सेत्स्यति'' इति भूमिं पादेन प्रहरन्ती उक्तवती ।

अनन्तरक्षणे एव तत्रत्या भूमिः कम्पिता जाता । जनाः भीताः सन्तः इतस्ततः धावितवन्तः । ग्रामस्य जनानां गृहाणि पतितानि । समुद्रः अपि उद्गतः सन् ग्रामं किञ्चित्कालं जलावृतं कृतवान् ।

यदा सर्वं शान्तं तदा ग्रामजनाः अव-

गतवन्तः यत् अस्माभिः विना विरोधं ग्रामाधिकारिणः दुर्व्यवहारः सोढः यत् तस्यैव फलम् एतत् इति ।

पश्चात्तापेन दग्धाः ते मालत्याः पुरतः अवदन् – ''अस्माकं गृहाणि विनष्टानि । समुद्रः आगत्य भूमिम् आवृतवान् इत्यतः अस्माकं भूमिः लवणमयी जाता । सहदेवविषये अस्माभिः अन्याय्यं कृतम् । समुद्रे पतनात् प्राणत्यागः एकः एव उपायः इदानीम् अस्माकम्'' इति ।

तदा मालती अवदत् – ''एतस्यां विपत्तौ बहवः मृताः । वयम् एव सजीवं स्थितवन्तः । एतस्य किमपि विशेषकारणं स्यात् । विना कारणम् एतादृशं न सम्भवति । अतः वयं योगिनः देवनाथस्य समीपं गत्वा प्रवृत्तं सर्वं तं निवेदयाम । सः एव योग्यं मार्गं दर्शयेत्'' इति ।

सर्वे एतस्मिन् विषये सहमतिं दर्शितवन्तः । ततः ते सर्वे योगिनः देवनाथस्य आश्रमं गतवन्तः ।

योगी देवनाथः तेषां करुणकथां श्रुत्वा अवदत् – ''भवतां ग्रामं वासयोग्यं कर्तुम् अपेक्षिता शक्तिः मम सकाशे अस्ति । किन्तु तां प्राप्तुं कश्चन योग्यः जनः आवश्यकः । यः जीवने किमपि अनुचितं कार्यं न कृतवान् सः एव तां प्राप्तुम् अर्हति । एतदर्थं सहदेवः एकः एव योग्यः । सः एव भवतां ग्रामं सुभिक्षं कर्तुम् अर्हति'' इति ।

एतत् श्रुत्वा रमानाथः अग्रे आगत्य अवदत् – ''मम अग्रजः राममन्दिरे मुकुटस्य चौर्यं कृतवान् अस्ति । एतत् चौर्यं तेन स्वार्थबुद्ध्या कृतम् । किं चौर्यं कदाचित् शिष्टसम्मतं



भवेत् ? एतत् जानन् अपि भवान् तम् उत्तमं जनं भावयति । किम् एतत् युक्तम् ? किं भवतः एषः निर्णयः युक्तिसङ्गतः स्यात् ?'' इति ।

देवनाथः रमानाथं तीक्ष्णदृष्ट्या पश्यन् - ''अहं सर्वम् अपि सम्यक् जानामि । दिव्यशक्तिं प्राप्तुं सहदेवस्य योग्यता अस्ति एव'' इति उक्त्वा सहदेवं स्वसमीपम् आहूय तस्मै दिव्याः शक्तीः दत्तवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! दिव्यशक्तेः दानविषये देवनाथः प्रमादं कृतवान् इति किं न भासते ? अनुजं सन्मार्गे आनेतुं सहदेवेन चौर्यं यत् कृतं तत् स्वजनहितपक्षपातेन एव खलु ? उत्तमकार्यस्य साधनाय अपि चौर्यरूपस्य मार्गस्य आश्रयणं किम् उचितम् ? चौर्यम् अपराधाय न इति कथनं युक्तं न खलु ? तथापि देवराजेन तदेव उक्तम् । एतत् किं देवराजस्य विवेकितां द्योतयति ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''सहदेवस्य अनुजं रमानाथं बलराजः स्वार्थसाधनाय उपयोक्तुम् ऐच्छत् । यदि रमानाथः सन्मार्गगामी स्यात् तर्हि तस्य तन्मित्राणां च रहस्यं प्रकटितं भवेत् । अतः तेन सहदेवस्य तेजोहननाय योजना कृता । एतत् सर्वथा अजानन् सहदेवः तेषां कुतन्त्रस्य बलिः जातः । रमानाथः सज्जनः यदि भवेत् तर्हि ग्रामे बहवः सज्जनाः स्युः इति सहदेवस्य चिन्तनम् आसीत् । ग्रामहितम् एव चिन्तितं तेन । स्वजनपक्षपातः तस्य व्यवहारे सर्वथा नास्ति । यदि मुकुटस्वीकारस्य कारणम् उच्येत तर्हि ग्रामस्य अमङ्गलं स्यात् इति विचिन्त्य सः अकृतस्यापि दोषस्य पात्रतां स्वयम् अङ्गीकृतवान् । योगी देवनाथः एतत्सर्वं जानन् एव सहदेवाय शक्तिं दातुं सज्जः जातः । अतः न योगिनः देवनाथस्य व्यवहारे किमपि अनौचित्यं, न वा सहदेवस्य व्यवहारे पक्षपातबुद्धिः'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






# मोगलशासनकालीना सूक्ष्मचित्रलेखनकला



मोगलशासनकाले सूक्ष्मचित्रलेखनकला भारतं प्रति आगता । हुमायुनः शेरशाहसुरिणा पराजितः सन् पर्शियादेशम् (इदानीं तस्य नाम इरान् इति) अगच्छत् ।

ततः वर्षानन्तरं भारतं प्रति आगमनसमये सः आत्मना सह उभाभ्यां सूक्ष्मचित्रकला-निपुणौ अपि आनीतवान् । तयोः नाम अस्ति अब्दुल् समद्, मुल्ला दोस्त महम्मद चेति ।

युवराजं सूक्ष्मचित्रकलां बोधयन् सः अन्यान् हिन्दुमुस्लिमकलाकारान् अपि तां कलां बोधितवान् । 'हमझानामा 'नामकस्य पर्शियनूग्रन्थस्य अनुवादसमये अकबरः तेषां चित्राणाम् उपयोगं कृतवान् । ग्रन्थोऽयं पञ्चदशानां वर्षाणां प्रयत्नेन सिद्धः अभवत् । द्वादशभागात्मके एतस्मिन् ग्रन्थे सहस्राधिकानि चित्राणि उपयुक्तानि सन्ति । अनन्तरकाले बाबरनामा अकबरनामा चेति ग्रन्थौ अपि एतादृशैः एव चित्रैः विभूषितौ स्तः ।

मोगलसाम्राज्यस्य शक्तिक्षयात् एषा कला अपि गच्छता कालेन क्षीणदशां गता । किन्तु एषा एव रजपूतकलाशैली पहरिकलाशैली इत्यादीनां स्थानीयानां कलाशैलीनां विकासस्य कारणं जाता ।



# पूजा न रक्षति दण्डात्

हेमचन्द्रः यदा हीरकपुरं पालयन् आसीत् तदा तस्मिन् देशे कश्चन विलक्षणः नियमः आसीत् । घोरम् अपराधं कृतवान् अपि कश्चित् चोरः पूजासमये प्रार्थनासमये वा भटैः सर्वथा न स्प्रष्टव्यः इति आसीत् राजाज्ञा । अतः भटाः चोरम् अभिज्ञाय अपि कदाचित् तं ग्रहीतुं न शक्नुवन्ति स्म ।

अपराधिनः एतस्य नियमस्य दुर्लाभं प्राप्नुवन्ति स्म । यदा आरक्षकाः ग्रहीतुम् आगच्छन्ति तदा ते धावन्तः गत्वा कमपि देवालयं प्रविश्य मूर्तेः पुरतः उपविश्य नेत्रे निमील्य प्रार्थनायां मग्नाः भवन्ति स्म । दीर्घः कालः अतीतः चेदपि तेषां पूजा तु समाप्ता एव न भवति स्म । श्रान्ताः भटाः यदा ततः निर्गच्छन्ति तदा एव ते चोराः देवालयात् निर्गत्य कुत्रापि पलायन्ते स्म ।

अतः तस्मिन् देशे चोराणां ग्रहणे महत् कष्टम् अनुभवन्ति स्म भटाः । जनानां पीडां जानन्तः अपि ते असहायकताम् अनुभवन्ति स्म ।

चन्द्रहासः नाम कश्चन राजोद्योगी कदाचित् राजानम् अवदत् - ''प्रभो ! देवालयाः पवित्राणि स्थानानि भवन्ति । जनानाम् आध्यात्मिकोन्नत्यै दैवभक्तिः पापभीतिः इत्यादयः नितान्तम् आवश्यकाः । किन्तु देवमूर्तेः पुरतः उपविष्टः अपराधी न ग्रहीतव्यः इति यः नियमः अस्ति सः सर्वथा असमीचीनः । तस्य दुरुपयोगः प्रचलति देशे । पूजाव्याजेन अपराधिनः भटान् असहायान् कुर्वन्तः सन्ति । अपराधिनां संख्या दिने दिने वर्धते । अतः मम नम्रं निवेदनम् अस्ति यत् एतस्य नियमस्य विषये पुनश्चिन्तनं वरम् इति । भवता न्यायाधिकारिणाम् अभिप्रायम् अपि आकलय्य यथायोग्यं निर्णयः करणीयः इति मम प्रार्थना'' इति ।

राजा एतत् सश्रद्धं श्रुत्वा अवदत् - ''एषः

'भामहः'

नियमः अस्माकं पूर्वजैः एव कृतः । तादृशस्य नियमस्य परिवर्तनम् अनौचित्याय एव भवेत् खलु'' इति ।

चन्द्रहासः राज्ञा सह चर्चां कर्तुम् अनिच्छन् मौनम् आश्रितवान् ।

कदाचित् भटाः सुगन्धपुरस्य वध्वाः आभरणानि अपहृत्य धावन्तं चोरम् अनुसृतवन्तः । धावन् चोरः ग्रामसीमाम् अतिक्रान्तवान् । भटाः अपि तस्य पृष्ठतः एव धावितवन्तः ।

धावन् चोरः मार्गपार्श्वे कुटीरे हरिद्राकुङ्कुमलिप्ताम् एकां शिलाम् अपश्यत् । नितरां सन्तुष्टः सः झटिति कुटीरं प्रविश्य तस्याः शिलायाः पुरतः उपविश्य प्रार्थनाम् आरब्धवान् ।

अनुसृत्य आगताः भटाः प्रार्थनामग्नं चोरं दृष्ट्वा परस्परम् अवदन् - ''अहो, एषः तु देव्याः पुरतः उपविष्टवान् एव ! इदानीम् एतस्य बन्धनं कर्तुं न शक्यते-अस्माभिः । कुटीरतः बहिः उपविश्य प्रतीक्षा करणीया अस्माभिः'' इति ।

चोरः तु शिलायाः पुरतः उपविश्य नेत्रे निमील्य ध्यानाभिनयम् आरब्धवान् । भटाः जानन्ति स्म यत् एषः कापट्यम् आचरति इति ।

किञ्चित्कालानन्तरं ते तं परितः स्थितवन्तः । तदा चोरः अवगतवान् यत् एते मां ग्रहीतुम् उद्युक्ताः सन्ति इति ।

अतः सः क्रोधेन अवदत् - ''अहं ध्यानं कुर्वन् अस्मि इत्येतत् किं न लक्षितम् ? देवस्य पुरतः मां बन्धुं नार्हन्ति भवन्तः'' इति ।

भटाः इतोऽपि अग्रे आगताः । तावता चोरस्य दृष्टिः पुरतः पतिता । तस्य पुरतः हरिद्राकुङ्कुमलिप्ता शिला न दृश्यते स्म । एतत् दृष्टवान् सः आश्चर्येण स्तब्धः । आरक्षकाः तं बद्धवन्तः ।

अनन्तरदिने न्यायाधिकारिणः मुखात् प्रवृत्तं सर्वं श्रुतं राज्ञा । चन्द्रहासस्य वचनस्य सत्यता तेन अवगता । अतः सः चोरग्रहणनिषेधसम्बद्धं तं नियमं परिवर्तितवान् । कपटानां चोराणां ग्रहणाय अनुज्ञा दत्ता तेन ।

एतस्मात् कारणात् अपराधिनः भटानां वञ्चने असमर्थाः जाताः । गच्छता कालेन तस्मिन् देशे अपराधाः न्यूनाः जाताः ।



# वार्ताविशेषः

## दन्तशलाकायाः उपरि चित्रनिर्माणम्




लोहस्य उपरि शिलायाः उपरि वा शिल्पस्य निर्माणं लोके सहजम् । बेङ्गलूरीयः सि.मल्लिकार्जुनरेड्डिः कक्ष्यातः आनीतानां सुधाखण्डानाम् उपरि चित्रनिर्माणम् आरब्धवान् । गच्छता कालेन तत्र नैपुण्यं प्राप्य गिन्नीसपुस्तकाय आत्मना निर्मितानि सुधाखण्डचित्राणि प्रेषितवान् सः । किन्तु व्यवस्थापकैः तानि न अनुमतानि । ततः सः मित्राणाम् उपदेशम् अनुसरन् दन्तशलाकानाम् उपरि चित्रनिर्माणम् आरब्धवान् । चतुर्विंशतिवर्षीयः सः गिन्नीसजनानां पुरतः अङ्गुलिदीर्घपरिमितायाः दन्त-शलाकायाः उपरि २८ वलययुक्तां शृङ्खलां चित्रितवान् । १९९३ तमे वर्षे अमेरिकीयः बाबुशामेयः १७ वलययुतां शृङ्खलां निर्माय अद्वितीयताम् आसादितवान् आसीत् । मल्लिकार्जुनः कर्णाटकराज्ये कोलारजनपदे तोप्पनहळ्ळिनामके ग्रामे जातः, इदानीं बेङ्गलूरुनगरे विज्ञानपदवीकक्ष्यायाम् (बि.एस्सि.) अधीते च ।

## शैत्यनिवारणं महता मूल्येन




भारतस्य 'सियाचिन्'नामकं सीमाप्रदेशं २००० सैनिकाः अहोरात्रं रक्षन्ति यत्र च शैत्यकाले ५५ - ६०° शैत्यं भवति । एतस्मात् महतः शैत्यात् रक्षणाय प्रतिसैनिकं द्विलक्षरूप्यकात्मकः व्ययः करणीयः भवति वेषभुषादि-निमित्तम् । तद्यथा – आस्ट्रेलियातः क्रीतस्य कफाक-पादत्राणस्य मूल्यं रू. ७२००/- । स्विझर्ल्याण्ड्तः क्रीतस्य पादकोषस्य मूल्यं रू. ११००/इटलीतः क्रीतस्य हस्तावरणस्य मूल्यं रू. २१०००/- । स्विझर्-ल्याण्ड्तः क्रीतस्य स्वेदकस्य मूल्यं रू. १८०००/। अतः एव क्रीतस्य ऊरुकस्य मूल्यं रू. ८८००/- । फिन्ल्याण्ड्तः क्रीतस्य युतकस्य मूल्यं रू. ३४००/। केनडातः क्रीतस्य शिरस्त्रस्य मूल्यं रू. १०००/- ।

*अन्यदेशीया जानपदकथा*
*(इरानदेशीया)*

# हेषारवेण जितं साम्राज्यम्



पर्शियादेशे (अद्यतनं नाम इरान् इति) त्रिसहस्राधिकवर्षेभ्यः पूर्वम् एव उत्कृष्टा संस्कृतिः आसीत् । कदाचित् स्मेर्डिसः नाम कश्चन धूर्तः तस्य देशस्य राजा जातः । तस्य शासनं प्रजारञ्जकं न आसीत् । अतः सः न सामान्यानां जनानां प्रियः जातः, न वा विदुषाम् ।

सः प्रजानां हिताय विशेषतः किमपि न कृतवान् । किन्तु आत्मनः रक्षणाय सर्वविधान् अपि उपायान् आश्रितवान् आसीत् सः । समर्थाः अङ्गरक्षकाः नियुक्ताः आसन् तेन । राजविरोधम् आचरतां जनानाम् अभिज्ञानाय तेन सर्वेषु विभागेषु गुप्तचराः नियोजिताः आसन् । तेन नियुक्ताः गुप्तचराः हिंसादिद्वारा राजविरोधिनां ध्वनिम् अल्पेन एव कालेन उन्मूलयन्ति स्म ।

तस्मात् एव भीताः मन्त्रिणः आस्थानिकाः च राज्ञः विरोधं कर्तुं न शक्तवन्तः । किन्तु षट् तीक्ष्णमतयः राज्ञः निवारणाय रहसि सङ्कल्पं कृतवन्तः । तैः सम्भूय योजना कृता ।

तदा कश्चन प्रश्नः उद्भूतः - कः राजा भवेत् ? इति । ते षड् अपि सिंहासनप्राप्तौ इच्छावन्तः आसन् एव । सिंहासनम् आरोढुम् अर्हाः आसन् अपि ते । तेषां परस्परमैत्री गाढा आसीत् । अतः सिंहासनं निमित्तीकृत्य कलहः न उत्पन्नः तेषां मध्ये ।

सम्यक् विचिन्त्य तेषु कश्चित् अवदत् - ''वयं सर्वेऽपि युगपत् एव सिंहासनम् आरोढुं न अर्हामः । अस्मासु अन्यतमेन एव सिंहासनम् आरोढव्यम् । अस्माभिः एतदर्थं कोऽपि उपायः आश्रयणीयः'' इति ।

तदा अन्यः तम् अवदत् - ''भवान् एव समुचितम् उपायं सूचयतु'' इति ।

ततः ते षट् अपि जनाः किञ्चित्कालम् उपायं चिन्तितवन्तः । अन्ते कश्चित् अवदत् - ''मम मनसि कश्चन उपायः परिस्फुरति । श्वः

प्रातः वयं सर्वे समीपस्थस्य सरोवरस्य परिसरम् आगच्छाम । यस्य अश्वः प्रथमं हेषते सः एव राजा भवतु'' इति ।

''भवतु नाम । कोऽपि मार्गः तु आश्रयणीयः एव । अन्यः कोऽपि मार्गः कस्यापि मनसि नास्ति अपि । अतः एतस्य मार्गस्य अश्रयणेन न कापि आपत्तिः अस्माकम्'' इति अवदन् अन्ये ।

अनन्तरदिने प्रातः ते सर्वे सरोवरतीरम् आगतवन्तः । हरिन्मयः सः परिसरः नितरां रमणीयः आसीत् । यदा सरोवरपरिसरः दृष्टः तदा डेरियसस्य अश्वः उच्चैः हेषारवम् अकरोत् ।

एतत् श्रुत्वा अन्ये सर्वे सहर्षं तम् अभिनन्दितवन्तः । भावी राजा क्षणाभ्यन्तरे निश्चितः जातः ।

ततः अल्पे एव काले स्मेर्डिसः सिंहासनात् च्यावितः । योग्ये मुहूर्ते डेरियसः सिंहासनम् आरूढवान् ।

डेरियसस्य अश्वस्य हेषारवस्य रहस्यं कोऽपि न जानाति स्म । वस्तुतः स्वयं डेरियसः अपि तत् रहस्यं न जानाति स्म । किन्तु गच्छता कालेन तत् रहस्यं प्रकटितं जातम् । प्रवृत्तं तु एवम् -

तेषां षण्णां सम्भाषणं डेरियसस्य सेवकः अपि श्रुतवान् आसीत् । स्वस्य स्वामिनः हितम् इच्छन् सः सायं स्वस्य अश्वं सरोवरसमीपं नीत्वा स्वादुम् आहारं तस्मै प्रभूततया दत्तवान् । अनन्तरदिने यदा सरोवरतीरं प्राप्तं तदा स च अश्वः पूर्वतनस्य दिनस्य आहारं स्मरन् महता सन्तोषेण हेषारवम् अकरोत् ।

तस्मात् दिनात् आभाणकः सर्वत्र श्रूयमाणः जातः - 'अश्वः राज्यम् अजयत्' इति । वस्तुतः तु बुद्धिमान् सेवकः स्वामिनः निमित्तम् उपायेन राज्यं सम्पादितवान् आसीत् ।

डेरियसेन सः सेवकः विविधैः पारितोषिकैः सम्मानितः उत न इति तु अस्माभिः न ज्ञायते । क्रि.पू. ५२१तमे वर्षे सिंहासनम् आरूढवान् सः विविधानि उत्तमानि कार्याणि तु कृतवान् एव । प्राचीनस्य इरान्देशस्य राजधानी पेरसेपोलिस् तेनैव प्रतिष्ठापिता । तेन कश्चन शिलालेखः लिखितः । तत्र एवं लिखितम् अस्ति - राष्ट्राणि सदा युद्धभयेन आक्रान्तानि भवन्तु इति भगवान् सर्वथा न इच्छति । उत्तमं शासनं, शान्तिः, समृद्धिः च मम पुत्राणां भवतु इति तस्य तीव्रा इच्छा' इति ।



# राजकुमाराः शिलास्तम्भाश्च

पूर्वं रत्नगिरिराज्यस्य शासनं करोति स्म कश्चित् राजा । तस्य त्रयः पुत्राः आसन् । ते त्रयः अपि सुरूपाः बुद्धिमन्तः च । यदा ते यौवनावस्थां प्राप्नुवन् तदा राज्यभारं वोढुं कः चेतव्यः इति चिन्ता उत्पन्ना राज्ञः मनसि । अतः सः त्रीन् अपि पुत्रान् आहूय उक्तवान् -



"भवन्तः विभिन्नासु दिक्षु प्रस्थाय भ्रमणं कृत्वा अस्मद्राज्ये प्रजाः कथं जीवनं कुर्वन्ति इति ज्ञात्वा सायङ्कालाभ्यन्तरे प्रत्यागच्छन्तु, प्रयाणसमये यद्यत् दृष्टं तत्सर्वं मां विस्तरेण वदन्तु च" इति ।

एतत् अङ्गीकृत्य अनन्तरदिने ते त्रयः अपि राजकुमाराः पाथेयं गृहीत्वा पादाभ्याम् एव प्रस्थानं कृतवन्तः ।

तेषु ज्येष्ठः राजकीर्तिः । द्वितीयस्य नाम आसीत् राजमूर्तिः इति । तृतीयस्य नाम आसीत् राजस्नेही इति । राजकीर्तिः भ्रातरौ अवदत् यत् अहं वामदिशम् अनुसृत्य गच्छामि इति । राजमूर्तिः अवदत् यत् अहं दक्षिणदिशम् अनुसरिष्यामि इति । कनिष्ठः भ्राता राजस्नेही अवदत् यत् अहम् उभयोः मध्ये स्थितं मार्गम् अनुसरिष्यामि इति । 'अन्धकार-प्रसारात् पूर्वम् एव अस्माभिः प्रत्यागन्तव्यम्' इति ते त्रयः अपि निश्चितवन्तः ।

राजकीर्तिः वामभागस्थं मार्गम् अनुसरन् बहुदूरं गत्वा किञ्चन अरण्यं प्रविष्टवान् । तत्र तेन तृणं चरन्तः त्रयः अश्वाः दृष्टाः । ततः

अनतिदूरे वृक्षस्य अधः उपविश्य तान् अश्वान् अवलोकमानः कश्चन साधुः अपि दृष्टः तेन । राजकीर्तिः तस्य निकटं गत्वा तम् अभिवन्द्य स्थितः । तदा सः साधुः तं पृष्टवान् - ''कः भवान् ? किमर्थम् एतावद्दूरम् आगतम् ?'' इति ।

सः आत्मनः परिचयम् उक्त्वा आगमनस्य उद्देशं विवृत्य - ''स्वामिन् ! अत्र दृश्यमानेषु अश्वेषु कञ्चन नेतुम् इच्छामि । यतः सायङ्कालात् पूर्वम् एव प्रत्यागन्तव्यम् अस्ति मया'' इति उक्तवान् ।

''यङ्कञ्चित् अश्वं नेतुम् अर्हति भवान् । किन्तु सायङ्कालाभ्यन्तरे प्रत्यागत्य यत् अद्भुतं दृष्टं तत् भवान् मां वदेत्'' इति साधुना उक्तम् ।

राजकीर्तिः एतत् अङ्गीकृत्य कञ्चित् अश्वम् आरुह्य वेगेन ततः निर्गतः । गमनमार्गे तेन एकम् उद्यानं दृष्टं, यत्र शाकानां वर्धनं कृतम् आसीत् ।

सावधानावलोकनेन सः ज्ञातवान् यत् उद्यानं परितः वृतिः कल्पिता अस्ति, अन्तः प्रवेशः न शक्यः इति । यावत् सः उद्यानं पश्यन् आसीत् तावता एव वृतिस्थाः दण्डाः लवित्ररूपं प्राप्य शाककर्तनम् आरभन्त । एतत् दृश्यम् अवलोक्य राजकीर्तिः नितराम् आश्चर्यचकितः अभवत् ।

सः साधोः निकटं प्रत्यागच्छत् । अश्वात् अवतीर्य आगतस्य तस्य मुखं दृष्ट्वा साधुः अपृच्छत् - ''किं विशिष्टं तत्र दृष्टं भवता ?'' इति ।

राजकुमारः आत्मना दृष्टं समग्रं विस्तरेण तम् अवदत् । सर्वं श्रुत्वा साधुः पृष्टवान् -



''अनेन भवता किम् अवगतम् ?'' इति ।

''महात्मन् ! अकस्मात् एतादृशी घटना दृष्टा मया । सर्वम् अस्पष्टम् अनवगतं च अस्ति अत्र । एतस्य विश्लेषणं कर्तुं नितराम् असमर्थः अस्मि'' इति राजकुमारः अवदत् ।

''एतादृशं सरलमपि विषयम् अवगन्तुम् असमर्थः भवान् राज्यं शासितुं कथं समर्थः भवेत् ? धिक् भवतः मूर्खताम्'' इति उक्त्वा तं शिलास्तम्भम् अकरोत् सः साधुः ।

राजमूर्तिः राजस्नेही च भ्रमणं समाप्य सायङ्कालाभ्यन्तरे प्रासादं प्रत्यागतौ । अग्रजस्य प्रतीक्षां च कृतवन्तौ । राजा अब्रवीत् - ''भवन्तौ इदानीं प्रवासेन श्रान्तौ स्तः । अतः श्वः एव भवतोः अनुभवं श्रोष्यामि । इदानीं



भवन्तौ विश्रान्तिगृहं गन्तुम् अर्हतः'' इति ।

अनन्तरदिने राजमूर्तिः अग्रजस्य अनुपस्थितिं सोढुम् अशक्तः सन् तस्य अन्वेषणाय प्रस्थितवान् । सः अपि तत्रैव गतवान्, यत्र तस्य भ्राता राजकीर्तिः स्तम्भरूपेण परिवर्तितः आसीत् । मुनेः आश्रमस्य समीपे तेन सुन्दराः अश्वाः दृष्टाः । तादृशाः सुन्दराः अश्वाः तेन इतःपूर्वं न दृष्टाः आसन् । महान्तं सन्तोषम् आश्चर्यं च अनुभवन् सः साधुं भक्त्या प्रणम्य – ''प्रवासाय कश्चन अश्वः दीयताम्'' इति प्रार्थितवान् ।

''सूर्यास्तात् पूर्वमेव आगन्तव्यम् । किमपि अपूर्वम् अवलोकितं चेत् अहं वक्तव्यः'' इति उक्त्वा अश्वस्य नयनाय अनुज्ञां दत्तवान् साधुः ।

राजमूर्तिः गमनत्वरायाम् अग्रजस्य स्तम्भं न लक्षितवान् एव । वस्तुतः स्तम्भस्य ऊर्ध्वभागे अग्रजस्य मुखस्य साम्यं द्रष्टुं शक्यम् आसीत् तेन । किन्तु तत् सर्वथा न लक्षितं तेन । मार्गे कुत्रापि अग्रजः दृश्येत किम् इति चिन्तयन् इतस्ततः पश्यन् अग्रे अगच्छत् सः ।

मध्येमार्गं पृष्ठभागेन काष्ठभारं कष्टेन वहन् कश्चन वृद्धः तेन दृष्टः । सः वृद्धः तादृशं महान्तं भारं वहन् एव काष्ठसङ्ग्रहे अपि मग्नः आसीत् ।

एतत् दृष्ट्वा महत् आश्चर्यम् अनुभवन् राजमूर्तिः अश्वस्य वेगं न्यूनीकृत्य – ''भोः महाशय ! किम् अहं भवतः साहाय्यं किञ्चित् करवाणि ?'' इति अपृच्छत् ।

सः वृद्धः न मुखम् उन्नीतवान्, न वा किमपि अवदत् । काष्ठानि सङ्गृह्णन् एव सः राजकुमारम् उपेक्ष्य तूष्णीम् अग्रे गतः ।

'एतत् तु नितरां विचित्रम् अस्ति । मुनिं वक्तुं योग्यम् अस्ति एतत्' इति अचिन्तयत् राजमूर्तिः । अतः एतत् विवरीतुं सः अत्युत्साहेन साधोः आश्रमं प्रति आगतः ।

अश्वात् अवतीर्य साधुं च नत्वा विनम्रः सन् सः घटितस्य विवरणं कृतवान् ।

''भवतः साहाय्यं तेन किमर्थं निराकृतम् इति किं भवान् ऊहितुम् अर्हेत् ?'' इति तं पृष्टवान् साधुः ।

''आर्य ! न जानामि तादृशस्य व्यवहारस्य तात्पर्यम् । स तु किमपि अवदन् ततः निर्गतवान् एव''' इति उक्तवान् सः राजमूर्तिः ।

''यदि तावदपि न अवगम्येत तर्हि राज्यभारं कर्तुं नितराम् असमर्थः एव भवान् । अतः

शिलास्तम्भरूपेण परिवृत्तो भवतु भवान्'' इति शापं दत्त्वा तम् अपि शिलास्तम्भम् अकरोत् साधुः ।

यदा द्वितीयः पुत्रः अपि न प्रत्यागतः तदा राजा नितरां खिन्नः चिन्ताग्रस्तः च जातः । एतत् दृष्ट्वा खिन्नः कनिष्ठः राजकुमारः राजस्नेही पितरम् अवदत् यत् अहम् अग्रजयोः अन्वेषणं करिष्यामि इति ।

अनन्तरदिने सोऽपि भ्रात्रोः अन्वेषणाय प्रासादात् निर्गतः । अरण्ये गच्छन् एषः अपि तैः सुन्दरैः अश्वैः आकृष्टः । सः अश्वानां समीपम् अगच्छत् । अश्वानां चरणं शान्ततया उपविश्य पश्यन् साधुः तेन समीपे एव दृष्टः । सः साधोः समीपम् अगच्छत् । तत्र सः भ्रातृमुखचिह्नयुक्तौ उभौ स्तम्भौ अपश्यत् । तयोः दर्शनात् तस्य महत् आश्चर्यं जातम् ।

सः आश्चर्येण एव साधुम् अपृच्छत् - ''महात्मन् ! किं मम भ्रातरौ अत्र आगतौ ?'' इति ।

''आम् । ताभ्याम् अत्र आगतम् आसीत् । तौ अश्वप्रयाणं कर्तुम् इष्टवन्तौ । प्रत्यागतौ तौ मम प्रश्नानाम् उत्तरं वक्तुम् असमर्थौ जातौ । अतः अहं तौ स्तम्भरूपेण परिवर्तितवान्'' इति अवदत् साधुः ।

''तौ सजीवतां यथा प्राप्नुयातां तथा कर्तुं मया किं कर्तव्यम् ?'' इति अपृच्छत् राजकुमारः ।

तत् श्रुत्वा साधुः उक्तवान् - ''भवान् अपि कश्चित् अश्वम् आरुह्य इतः गत्वा मार्गे दृष्टम् अपूर्वं दृश्यं सायङ्कालाभ्यन्तरे आगत्य मां वदतु । मया पृष्टस्य प्रश्नस्य उत्तरं यथायोग्यं दत्तं चेत् भवन्तः त्रयः अपि अश्वम् आरुह्य प्रासादं प्रतिगन्तुम् अर्हन्ति'' इति ।

ततः तृतीयः राजकुमारः साधुना सूचितायां दिशि प्रस्थितः । बहुधा अटितं चेदपि यत् साधुं कथयितुम् अर्हं स्यात् तादृशं विशिष्टं किमपि न अवलोकितं तेन ।

पिपासया पीड्यमानः सः 'अश्वस्य कृते विश्रान्तिं कल्पयित्वा जलं पातव्यं मया' इति चिन्तयित्वा एकस्य कासारस्य निकटं गत्वा तृणेषु अश्वं बद्ध्वा जलपानार्थं कासारे हस्तौ प्रसारितवान् । किन्तु जलस्य स्पर्शः एव न जातः । सः ततोऽपि अग्रे अगच्छत्, हस्तौ प्रासारयत् च । तथापि जलं तु न प्राप्तम् । सः ततोऽपि अग्रे अगच्छत् । तथापि जलं न प्राप्तम् । अग्रे गच्छन् सः कासारस्य तलभागं





प्राप्तवान् । तथापि बिन्दुमात्रम् अपि जलं न लब्धम् । शुष्के कासारे स्थितवान् अस्मि इति अनुभवः प्राप्तः तेन ।

एतेन अनुभवेन आश्चर्यचकितः सः – 'इदमेव कथनयोग्यम्' इति मत्वा ततः प्रस्थितवान् । अश्वम् आरुह्य साधोः निकटम् आगत्य सः साधुं प्रवृत्तं सर्वं यथावत् निवेदित-वान् ।

तदा साधुः तम् अपृच्छत् – ''एतस्य दर्शनात् किम् अवगतं भवता ?'' इति ।

अस्य प्रश्नस्य उत्तरं यथामति दत्तं तेन । किन्तु तेन उत्तरेण साधुः न सन्तृप्तः । अपरविधम् उत्तरम् उक्तं तेन । ततः अपि साधुः न तृप्तः । योग्यस्य उत्तरस्य दाने असमर्थं तम् उद्दिश्य साधुः – ''राजकुमार ! यद्यपि भवान् भ्रात्रोः अपेक्षया उत्तमः, तथापि ताभ्यां या गतिः प्राप्ता ततः आत्मानं मोचयितुं तु न समर्थः । अतः भवता अपि स्तम्भाकारता प्राप्तव्या एव'' इति अवदत् ।

अनन्तरक्षणे एव सः राजकुमारः अपि भ्रात्रोः स्थितिम् एव अवाप्नोत् ।

तृतीयः राजकुमारः अपि न प्रत्यागतः इत्यतः राजा नितरां दिग्भ्रान्तः जातः । तेषाम् अनागमनस्य कारणं तु वक्तुं कोऽपि न शक्तवान् ।

मन्त्रिणः असूचयन् यत् अदृश्यतां गतानां राजकुमाराणाम् अन्वेषणाय सैन्यस्य प्रेषणं वरम् इति । किन्तु राज्ञे एषः प्रस्तावः न अरोचत । सः निश्चितवान् यत् पुत्राणाम् अन्वेषणाय मया एव स्वयं गन्तव्यम् इति ।

एवं निश्चित्य सः पुत्राणाम् अन्वेषणं कर्तुं स्वयमेव निर्गतः ।

मार्गे सः अपि अश्वानां चरणं शान्ततया पश्यन्तं तं साधुम् अपश्यत् । 'एषः मम पुत्राणां विषये किमपि वक्तुं शक्नुयात् अपि' इति विचिन्त्य सः तस्य समीपं गत्वा तं भक्त्या प्रणम्य पृष्टवान् – ''महात्मन् ! किम् अनेन मार्गेण मम त्रयः पुत्राः कदाचित् आगताः आसन् ?'' इति ।

''आम् । आगताः आसन् ते त्रयः अपि । किन्तु तान् त्रीन् अपि राज्यशासने असमर्थान् निश्चित्य अहं तान् शिलस्तम्भरूपेण परिवर्तितवान् अस्मि । तान् स्तम्भान् द्रष्टुम् अर्हति भवान्'' इति उक्त्वा समीपे स्थितान् त्रीन् स्तम्भान् अदर्शयत् साधुः ।

तत् स्तम्भत्रयं दृष्ट्वा द्रुतहृदयः अभवत् राजा । ''देव ! भवत्प्रश्नानाम् उत्तरं दातुं किम् अहम् अर्हेयम् ?'' इति अपृच्छत् सः ।

साधुः ज्येष्ठेन पुत्रेण दृष्टं शाकोद्यानं विवृत्य पृष्टवान् - ''केनचिदपि जनेन अरक्ष्यमाणं शाकोद्यानं दृष्टं ज्येष्ठेन राजकुमारेण । क्षेत्र-रक्षकः कोऽपि तत्र न आसीत् । वृतिस्थाः दण्डाः एव सस्यानां नाशनं कृतवन्तः । एतस्य अर्थः कः ?'' इति ।

''वस्तुतः तु सस्यानां शाकानां च रक्षणाय वृतिः कल्प्यते । शाकानाम् एव नाशकाः ते वृतिस्थाः दण्डाः दुष्टसेवकाः इव । दुष्टाः सेवकाः दुष्टताम् आचरन्तः देशस्य सम्पदः नाशयन्ति इति एतस्य तात्पर्यं भवति'' इति उत्तरं दत्तवान् राजा ।

एतत् उत्तरं श्रुत्वा स्मितवदनः साधुः द्वितीयस्य पुत्रस्य अनुभवं श्रावयित्वा अवदत् - ''महान्तं भारं वहन् अपि सः काष्ठवाहकः पुनरपि काष्ठानां सङ्ग्रहणे एव उद्युक्तः । आत्मना उह्यमानस्य भारस्य चिन्ता एव न आसीत् तस्य । एतस्य तात्पर्यं किं स्यात् इति चिन्तयति भवान् ?'' इति ।

तदा तस्य प्रसङ्गस्य विश्लेषणं कुर्वता राज्ञा उक्तम् - ''मानवः स्वसमीपे विद्यमानेन स्वल्पेन धनेन तृप्तः न भवति । ततोऽप्यधिकमेव सङ्ग्रहीतुम् इच्छति सः । एतादृशे प्रसङ्गे अन्येन उक्तं न श्रूयते अपि'' इति ।

द्वितीयेन उत्तरेण अपि सन्तुष्टः साधुः पुनः अपृच्छत् - ''भवतः तृतीयः पुत्रः जलं पातुम् ऐच्छत् । किन्तु सः यथा यथा अग्रे अगच्छत् तथा तथा जलम् अग्रे अधावत् । एवं किमर्थं जातम् ?'' इति ।

तदा राजा अवदत् - ''यः स्वसम्पदं वृथा व्ययीकरोति सः अन्ते सर्वस्मात् अपि वञ्चितः भविष्यति इति तस्य तात्पर्यम्'' इति ।

एतावता तस्य त्रयः अपि पुत्राः प्रत्यक्षीभूय पुरतः स्थिताः । राजा पुत्रैः सह नम्रतया साधुं प्रणम्य अवदत् - ''कृपया अस्मत्प्रासादम् आगत्य एते त्रयः अपि सर्वसमर्थाः करणीयाः भवता'' इति ।

साधुः त्रिभ्यः अपि राजकुमारेभ्यः एकैकम् अश्वं दत्त्वा आशिषा अनुगृह्य तान् प्रेषितवान् ।

कतिपयदिनानन्तरं राजा महता आदरेण तं साधुं प्रासादं नीत्वा राजगुरुं कृतवान् ।





# दासीपुत्रः

ब्रह्मदत्तः यदा काशीराज्यं पालयति स्म तदा कस्मिंश्चित् धनिककुटुम्बे बोधिसत्त्वः जन्म प्राप्नोत् । यौवनावस्थां गतः सः विवाहितः अपि अभवत् । पुत्रः अपि प्राप्तः तेन । तदवसरे एव तस्य दासी अपि पुत्रवती अभवत् । उभौ अपि बालौ सहैव वर्धमानौ आस्ताम् ।

ब्रह्मदत्तस्य पुत्रः अध्ययनार्थं यदा गुरुकुलं गच्छति स्म तदा दास्याः पुत्रः कटाहकः अपि तस्य पुस्तकानि गृहीत्वा सहायकरूपेण गुरुकुलं प्रति गच्छति स्म । एवं तेन सह सर्वदा तिष्ठन् कटाहकोऽपि उत्तमम् एव ज्ञानं सम्पादितवान् ।

गच्छता कालेन सः बुद्धिमान् इति ख्यातः अभवत् । 'सुशिक्षितः बुद्धिमान् च सन् अपि यदि अहं दासीपुत्रः इति जनैः निर्दिष्टः भवेयं तर्हि तत् अनुचितं भवेत्' इति निश्चित्य सः सङ्कल्पं कृतवान् यत् विद्यायाः बुद्धिमत्तायाः च आधारेण मया कथमपि चातुर्येण समुचितं स्थानं प्राप्तव्यम् इति ।

काश्याः सुदूरे प्रत्यन्तदेशे बोधिसत्त्वस्य किञ्चन मित्रं निवसति स्म । बोधिसत्त्वस्य नाम्ना कटाहकः अनधिकृतम् एकं पत्रं तस्मै मित्राय अलिखत् ।

तत्र एवं लिखितम् आसीत् – ''मम पुत्रं भवत्सकाशं प्रेषयन् अस्मि । आवयोः मैत्रीं दृढीकर्तुं भवत्पुत्रीम् एतस्मै दत्त्वा भवान् विवाहं निर्वर्तयतु । विवाहानन्तरं तं भवतः गृहे एव स्थापयतु । कदाचित् विरामं प्राप्य अहं तत्र आगमिष्यामि'' इति ।

पत्रे बोधिसत्त्वस्य मुद्रां स्वयमेव उट्टङ्क्य अपेक्षितं धनं तस्य कोषागारात् स्वीकृत्य प्रत्यन्तदेशं प्रति निरगच्छत् कटाहकः । तत्र गत्वा सः तस्मै धनिकाय तत् कृत्रिमं पत्रं दत्तवान् ।

तस्य पत्रस्य दर्शनेन सन्तुष्टः धनिकः

कटाहकाय पुत्रीं प्रदाय विवाहं महता वैभवेन निर्वर्तितवान् ।

धनिकपुत्रीम् ऊढवता कटाहकेन बहुविधानि आनुकूल्यानि प्राप्तानि । स्वादु भोजनं प्राप्यते स्म प्रतिदिनम् अपि । सुखभोगादिषु मग्नः अपि सः विना कारणम् असन्तोषेण वदति स्म – ''एतद्देशीयाः असभ्याः । अहो, कीदृशं भोजनम् ! कीदृशम् एतत् वस्त्रम् !! एतादृशी असभ्यता मया अन्यत्र कुत्रचिदपि न दृष्टा'' इति ।



कदाचित् बोधिसत्त्वस्य मनसि कटाहकस्य विषये चिन्ता उत्पन्ना – तस्य का गतिः जाता स्यात् इति । अतः कटाहकस्य अन्वेषणार्थं सर्वासु दिक्षु तेन भटाः प्रेषिताः ।

प्रत्यन्तदेशं गतवता केनचित् दूतेन ज्ञातं यत् स्वस्य नाम परिवर्त्य कटाहकः तत्रत्यस्य धनिकस्य पुत्रीं परिणीतवान् अस्ति, अहं काशीराजस्य पुत्रः इति असत्यं वदन् सुखमयं जीवनं कुर्वन् अस्ति इति । सः प्रत्यागत्य स्वामिनं प्रवृत्तं सर्वम् अवदत् ।

प्रवृत्तं सर्वं विज्ञाय दुःखितः बोधिसत्त्वः ततः तम् आनेतुं स्वयम् एव प्रस्थितः ।

बोधिसत्त्वस्य आगमनवार्तां ज्ञात्वा नितरां दिग्भ्रान्तः सन् कटाहकः ततः पलायनम् अचिन्तयत् । परन्तु तथा करणेन हानिरेव अधिका भवेत् इति विचारः आगतः तस्य मनसि । अतः स च विचारः परित्यक्तः तेन ।

'स्वामिनं समग्रां वस्तुस्थितिं विवृत्य क्षमायाचनं करोमि चेदेव वरं स्यात्' इति निश्चितवान् सः ।

'धनिकस्य स्वामिनः निकटे कर्मकरसदृशं व्यवहारं यदा अहं करोमि तदा अत्रत्याः मयि शङ्कां प्राप्नुयुः' इति विचिन्त्य सः सर्वेषां पुरतः अवदत् – ''अहम् अन्ये पुत्राः इव न । पितुः पुरतः अहम् अत्यन्तं नम्रः भवामि । सेवकः इव व्यवहारः भवति मम तत्र । सः यदा भोजनार्थम् उपविशति तदा अहं व्यजनेन वीजयिष्यामि । जलादिकं च स्वयं नीत्वा दास्यामि । तस्य उपस्थितौ अहं वस्तुतः अपि तस्य सेवकः एव भविष्यामि । एषः मम स्वभावः'' इति ।

ततः सः धनिकं श्वशुरम् उक्तवान् – ''मम पिता काशीतः आगच्छन् अस्ति । तं दूरात् एव स्वागतीकृत्य आनेतुम् इच्छामि अहम्'' इति ।

धनिकः एतं स्वागतप्रस्तावं सहर्षम् एव अङ्गीकृतवान् ।

कटाहकः नगरात् बहिरेव बोधिसत्त्वस्य स्वागतं कृत्वा तस्य पादयोः निपत्य प्रवृत्तं सर्वं निवेद्य - 'मां रक्षतु भवान्' इति वदन् क्षमाम् अयाचत ।

बोधिसत्त्वस्य अभयदानानन्तरं सः तेन सह श्वशुरगृहम् आगतवान् ।

बोधिसत्त्वं दृष्ट्वा सन्तुष्टः धनिकः अवदत् - ''भवदिच्छानुगुणमेव मत्पुत्रीं दत्त्वा विवाहः निर्वर्तितः मया'' इति ।

बोधिसत्त्वः सन्तोषं प्रकटयन् कटाहकविषये पुत्रवत् एव व्यवहारं कृतवान् ।

ततः च धनिकपुत्रीम् आहूय पृष्टवान् - ''भवत्या सह मम पुत्रः सम्यगेव व्यवहरति खलु'' इति ।

''समीचीनः एव व्यवहारः क्रियते तेन सर्वत्र अपि । किन्तु कदाचित् विना कारणं खाद्यविषये आक्षिपति सः । महता प्रयत्नेन स्वादु भोजनं सज्जीकृतं चेदपि सः तु दोषारोपणं करोति एव'' इति उक्तवती ।

एतत् श्रुत्वा बोधिसत्त्वः - ''सः अस्मद्गृहे अपि एवमेव करोति स्म । अतः भोजनावसरे यदि कोऽपि आक्षेपः तेन क्रियेत तर्हि भवती एकं श्लोकं वदतु । अहं भवतीं तं श्लोकं पाठयिष्यामि'' इति वदन् कञ्चित् श्लोकं तां बोधितवान् ।

ततः कञ्चित् कालं तत्र उषित्वा काशीं प्रति प्रस्थितवान् सः ।

तस्य निर्गमनानन्तरं पूर्वतोऽपि अधिक-धैर्यवान् अभवत् कटाहकः । पूर्वापेक्षया अधिकदोषारोपणम् आरब्धवान् सः । यदा पतिः एवं दोषारोपणम् आरब्धवान् तदा तस्य पत्नी एतं श्लोकम् उक्तवती -

उक्त्वा बहुविधासत्यं
योऽन्यज्जनपदं गतः ।
निन्दन्नेषोऽन्वहं सर्वान्
भुङ्क्ते भोगं कटाहकः ।।

*(बहुविधानि असत्यानि उक्त्वा अन्यत् जनपदं गतः कटाहकः अन्येषां निन्दां कुर्वाणः सुख-भोगादिकम् आप्नोति ।)*

यद्यपि तस्य पत्नी एतस्य श्लोकस्य तात्पर्यं न जानाति स्म, तथापि सा रहस्यं जानाति इति मत्त्वा भीत्या कटाहकः तदनन्तरं कदापि विना कारणम् आक्षेपम् अकुर्वन् आनन्देन दिनानि यापितवान् ।





# विष्णुपुराणम्

शौनकादयः मुनयः सूतमहर्षिं प्रार्थितवन्तः – ''मुनीन्द्र ! विष्णुः कृष्णरूपेण गोलोके निवसति इति वयं शृणुमः । कृष्णस्य वृत्तान्तं समग्रं श्रोतुम् इच्छामः । कृपया वदतु'' इति ।

ततः सूतमुनिः कृष्णकथाम् आरब्धवान् – ''सत्यलोकस्य उपरि गोलोकः अस्ति । तत्र सर्वदा नक्षत्राणि प्रकाशन्ते, कौमुदी विराजते च । तत्र विष्णुः गाढनीलवर्णसहितः सन् कृष्णः इति नाम्ना विलसति । तस्मिन् लोके पुण्या विरजानदी प्रवहति । तस्याः तीरे तुलसीवने उपविश्य कृष्णः वेणुं वादयति । वेणुवादनतः उत्पन्नः मञ्जुलध्वनिः एव राधा-स्वरूपेण प्रत्यक्षः अस्ति । *

प्रकृतिरूपिणी राधा, पुरुषरूपः कृष्णः च सर्वदा सहैव निवसतः । राधां विना कृष्णः नास्ति । कृष्णं विना राधा न जीवति । सुदामा सदाकालं कृष्णस्य सेवायां निरतः अस्ति ।

राधादेव्याः शरीरतः असङ्ख्याः गोपिकाः समुत्पन्नाः । विरजानदी स्त्रीवेषं धृत्वा वृन्दा-रूपेण प्रेम्णा कृष्णस्य आराधनं करोति स्म ।

एकदा कृष्णः राधा च परस्परम् अनुराग-बद्धौ एकान्ते उपविष्टौ आस्ताम् । तदा कृष्णम् अन्विष्यन्ती विरजा तत्र आगता । एतत् दृष्ट्वा नितरां कुपिता राधा – ''भवती भूलोके जन्म प्राप्नोतु'' इति शापं दत्तवती ।

''एतत् शापदानं सर्वथा अनुचितम्'' इति अवदत् सुदामा । कुपिता राधा सुदामानमपि शप्तवती –''भवान् अपि राक्षसत्वेन भूलोके जन्म प्राप्नोतु'' इति ।

राधया शप्ता विरजा भूलोके राजकुमारी भूत्वा तुलसी, वृन्दा चेति नाम प्राप्तवती ।

एकदा देवेन्द्रः कैलासं गतवान् । तत्र शिवः



एव रुद्रभटरूपेण द्वारपालनं करोति स्म । एतत् अजानन् इन्द्रः तस्य उपरि वज्रायुधस्य प्रयोगं कृतवान् । तदा शिवः स्वकीयं वास्तविकं रूपं धरन् तृतीयं नेत्रम् उन्मीलितवान् ।

तदा भीतः देवेन्द्रः शिवस्य पादयोः पतित्वा आत्मनः रक्षणं प्रार्थितवान् । तदानीं शान्तः शिवः क्रोधं संहरन् क्रोधाग्निं समुद्रे क्षिप्तवान् । तस्मिन् समये राधायाः शापवशात् सुदामा गोलोकतः अग्निक्षेत्रे पतितः सन् समुद्रे बालकरूपेण जन्म प्राप्तवान् । तेन शिरसि श्वेतः शङ्खः धृतः आसीत् ।

कृष्णः सुदामा च मैत्र्या अभिन्नौ । कृष्णः स्वसहचरस्य सुदाम्नः विषये अनुकम्पवान् आसीत् । अतः सः तं बालकम् अभेद्येन कृष्णकवचेन अनुगृहीतवान् । तस्मिन् काले दम्भनामकः राक्षसः पुत्रप्राप्तये समुद्रतटे घोरं तपः आचरन् आसीत् । एषः दम्भः समुद्रे प्लवमानं बालकं दृष्ट्वा सन्तुष्टः । सः तं बालकं गृहं नीत्वा पुत्ररूपेण पोषितवान् । सः बालकः जलन्धरनाम्ना निर्दिष्टः । तस्य अपरं नाम शङ्खचूडः इति ।

तुलसी विष्णुम् एव पतिं मन्यमाना विष्णोः आराधने तत्परा तपसि लीना आसीत् । एकदा जलन्धरः तपस्यन्तीम् एतां दृष्टवान् ।

जलन्धरः साक्षात् तुलसीदेव्याः पितुः धर्मध्वजस्य समीपं गत्वा उक्तवान् – ''अहं तुलसीं परिणेतुम् इच्छामि'' इति ।

धर्मध्वजः एतं प्रस्तावम् अङ्गीकृतवान् । अल्पे एव काले तुलसीदेवी–जलन्धरयोः विवाहः सम्पन्नः । तुलसीदेवी तु जलन्धरं देवं मन्यमाना भक्त्या पतिसेवां करोति स्म ।

जलन्धरः तुलसीदेव्याः सौन्दर्येण आकृष्टः आसीत् इति तु सत्यम् । किन्तु तामसगुणयुताय तस्मै तुलसीदेव्याः सात्त्विकाः गुणाः सर्वथा न अरोचन्त । अतः सः विवाहानन्तरं कदापि तुलसीदेवीं प्रीत्या न दृष्टवान् ।

तुलसीदेवी तु सर्वदा पतिदेवं स्मरन्ती तस्य चरणचिह्नानि एव पूजयन्ती आसीत् । जलन्धरः राक्षसानां सम्राट् जातः । सः कृष्णकवचस्य प्रभावेण त्रिषु अपि लोकेषु विजयं प्राप्तवान् ।

अथ कदाचित् कलहप्रियः नारदमुनिः जलन्धरस्य समीपं गत्वा पार्वतीदेव्याः अनुपमसौन्दर्यस्य वर्णनं कृतवान् । तस्मात् शिवं युद्धार्थम् आह्वयन् जलन्धरः उक्तवान् – ''विना विरोधं पार्वतीं मह्यम् अर्पयतु । अथवा युद्धेन भवन्तं पराजित्य अहमेव तां नेष्यामि'' इति ।

एतेन कुपितः शिवः जलन्धरस्य उपरि त्रिशूलं प्रयुक्तवान् । जलन्धरस्य वक्षस्स्थलेन घट्टितं त्रिशूलम् अधः पतितम् ।

एतत् दृष्ट्वा भीता पार्वती राधादेवीं शरणं गतवती । तदा राधादेवी पार्वतीम् उक्तवती – ''जलन्धरः शिवस्य नेत्राग्निना समुत्पन्नः । अतः शिवेन एकेन एव तस्य मारणं शक्यम् । किन्तु जलन्धरेण विष्णुकवचं प्राप्तम् अस्ति । यावत् विष्णुकवचं तस्य समीपे तिष्ठति, तावत् तस्य मारणम् अशक्यम् एव । तुलसीदेव्याः पातिव्रत्यम् अपि तं रक्षति । अतः भवती विष्णुं शरणं गच्छतु । सः एव परिहारमार्गम् उपदिशति'' इति ।



पार्वत्या प्रार्थितः विष्णुः वृद्धब्राह्मणवेषं धृत्वा जलन्धरसमीपं गत्वा तं बहुधा प्रशंसितवान् – ''भवान् तु वीराग्रेसरः । एतादृशस्य भवतः कृते पुनः कवचं किमर्थम् ? दुर्बलशरीराय मह्यं तत् दत्तं चेत् अहं किञ्चित्कालं सुखेन जीवेयम्'' इति ।

प्रशंसया सन्तुष्टः जलन्धरः – ''भवतः वचनं सत्यम् । समर्थाय मह्यं कृष्णकवचं किमर्थम् ?'' इति वदन् तस्मै कवचं दत्तवान् ।

एतदनन्तरं विष्णुः जलन्धरस्य रूपं धृत्वा तुलसीदेव्याः अन्तःपुरं प्रविष्टवान् । जलन्धरः तु कैलासे शिवेन सह घोरं युद्धं कुर्वन् आसीत् ।

पूर्वं कदाचित् गण्डकी नाम देववेश्या भूलोकम् आगत्य विष्णुं घोरतपसा पूजितवती आसीत् । प्रसन्नः विष्णुः ताम् उक्तवान् आसीत् यत् वरः याच्यताम् इति । तदा गण्डकी विनयेन विष्णुं प्रार्थितवती आसीत् – ''भगवन् ! यथा जनाः स्वीयेषु गृहेषु रत्नादीन् निधीन् गुप्तरूपेण स्थापयन्ति, तथैव अहमपि भवन्तम् आत्मनि गोपयितुम् इच्छामि'' इति ।

तदा विष्णुः उक्तवान् – ''भवती भूलोके नदीरूपेण प्रवहतु । अहं शालग्रामः भूत्वा भवत्याः अन्तः निवत्स्यामि'' इति । अनन्तरं गण्डकी नदीरूपेण भूलोकम् अवतीर्णा ।

मायाप्रभावतः तुलसीदेवी आगतं विष्णुम् एव पतिं भावितवती । 'मम पतिः बहोः कालात् अनन्तरम् अन्तःपुरम् आगतः' इति चिन्तयन्ती सा नितरां सन्तुष्टा । भ्रमाधीना सा पतिरूपेण स्थितस्य विष्णोः चरणयोः प्रणामं कृतवती । तस्मिन् एव समये शिवः त्रिशूलेन जलन्धरस्य शिरश्छेदं कृतवान् । ततः उत्प्लुतं शिरः तुलस्याः हस्तं स्पृशत् भूमौ अपतत् । तदा विष्णुः स्वकीयं निजरूपं धृतवान् ।

एतत् दृष्ट्वा तुलसी आश्चर्यचकिता । कोपेन



सा शापं दत्तवती - ''हे विष्णो ! भवान् मां वञ्चितवान् । एतस्य अपराधस्य कारणतः भवान् शिलास्वरूपं प्राप्नोतु'' इति ।

तदा विष्णुः मन्दहासं प्रकटयन् उक्तवान् - ''अये तुलसीदेवि ! भवत्याः शापम् अहं सन्तोषेण एव अङ्गीकरोमि । भवत्याः पतिः जलन्धरः अन्यः न । मदंशसम्भूतस्य सुदाम्नः अंशेन युक्तः एव सः । विवाहतः पूर्वं भवती मां पतित्वेन प्राप्तुं तपः आचरितवती आसीत् । विवाहानन्तरं पातिव्रत्यधर्मम् आचरन्ती भवती स्त्रीणाम् आदर्शः सञ्जाता । इतःपरं भवती पातिव्रत्यद्योतकस्य तुलसीसस्यस्य रूपेण भूलोकम् अवतरिष्यति । मम अत्यन्तं प्रीतिपात्रं च भविष्यति । अहं शालग्रामरूपेण भवत्याः सान्निध्ये स्थास्यामि'' इति ।

अनन्तरं विष्णुः शालग्रामरूपेण गण्डकीनद्याम् अवतारं कृतवान् । तुलसी सस्यरूपेण भूलोकम् अवतीर्णा ।

एतदनन्तरं गण्डकीनदीमात्रे प्राप्यमाणां शालग्रामशिलां जनाः तुलसीसस्यस्य मूले स्थापयित्वा पूजां कर्तुम् आरब्धवन्तः ।

कदाचित् महर्षीणां मध्ये एका चर्चा उत्पन्ना - ''त्रिमूर्तिषु कः श्रेष्ठः ?'' इति । निर्णयं कर्तुम् अशक्ताः ते एतदर्थं भृगुमहर्षिं प्रेषितवन्तः । भृगुः आदौ सत्यलोकं गतवान् । तत्र ब्रह्मा सरस्वत्याः वीणावादनस्य श्रवणे मग्नः आसीत् । अतः सः भृगुमहर्षेः आगमनं न ज्ञातवान् । अनन्तरं भृगुः कैलासं गतः । तत्र पार्वत्या सह नृत्यं कुर्वन् स्थितः शिवः भृगुमहर्षिम् अनादरभावेन दृष्टवान् ।

उभयत्रापि अपमानितः भृगुः कोपाविष्टः जातः । भृगुमहर्षेः पादे एकं विशिष्टं नेत्रम् आसीत् । अतः सः गर्वितः अपि आसीत् । कुपितः एव सः वैकुण्ठं प्रविष्टवान् । तस्मिन् समये विष्णुः लक्ष्मीदेव्या सह शेषशय्यायां विराजमानः आसीत् । एतत् दृष्ट्वा भृगुमहर्षेः कोपः प्रवृद्धः । सः असहनीयेन कोपेन विष्णोः वक्षस्स्थलं पादेन प्रहृतवान् ।

तदा विष्णुः झटिति एव उत्थाय महर्षिं नमस्कृतवान् । सः महर्षेः चरणौ शिरसि स्थापयित्वा - ''महात्मन् ! भवदीयौ सुकोमलौ एतौ चरणौ मदीयस्य कठिनतमस्य वक्षसः आघातेन न जाने, कियतीं पीडाम् अनुभूतवन्तौ इति'' इति वदन् भृगुमहर्षेः पादौ मृदु आमृशन् पादतले स्थितं नेत्रम् अङ्गुल्या नुन्नवान् । एतेन भृगोः अहङ्कारः समग्रः अपगतः । सः विष्णोः स्तुतिं कुर्वन् भूलोकं गतवान् । तत्र

सः सर्वान् मुनीन् विष्णुमहत्त्वं बोधितवान् ।

यदा लक्ष्मीः विष्णोः वक्षः आलम्ब्य स्थितवती आसीत् तदा एव भृगुः तत्र पादेन ताडितवान् आसीत् । एतत् आपमानकरम् इति लक्ष्मीः चिन्तितवती । 'मुनेः पादप्रहारेण विष्णुः अपवित्रः जातः' इत्यपि सा चिन्तितवती । अतः सा वैकुण्ठं परित्यज्य भूलोकम् आगत्य तपसि लीना जाता ।

लक्ष्मीम् अन्विष्यन् विष्णुः श्रीनिवासनाम्ना वकुलादेव्याः आश्रमं प्राप्तवान् । वकुलादेवी कृष्णावतारसमये यशोदा आसीत् ।

पूर्वं कदाचित् गोकुले यशोदा कृष्णम् उक्तवती आसीत् - ''पुत्रस्य विवाहं द्रष्टुं माता सर्वदा इच्छति इति भवान् प्रायः न जानाति । मम इच्छा अद्यावधि पूर्णा न जाता'' इति ।

कृष्णः उक्तवान् - ''आगामिनि जन्मनि भवत्याः इच्छा सफला भविष्यति'' इति ।

अस्मिन् जन्मनि वकुलादेवी श्रीनिवासं पुत्ररूपेण प्राप्य आनन्दिता जाता । श्रीनिवासः अपि वकुलादेवीं मातृरूपेण प्राप्य सन्तुष्टः ।

एकदा श्रीनिवासः वने विहरन् आसीत् । तदा आकाशराजस्य पुत्री पद्मावती वनविहारम् इच्छन्ती सखीभिः सह तदेव वनम् आगतवती । तस्मिन् समये एकः मदगजः घीङ्कुर्वन् तत् वनं प्रविष्टवान् । राजकुमार्याः सख्यः भीताः सत्यः सुदूरं धावितवत्यः । अस्मिन् कोलाहले राजकुमारी पद्मावती धावन्ती श्रीनिवासस्य समीपे पतितवती ।

श्रीनिवासः गजस्य आक्रमणं निरुन्धन् गज-पद्मावत्योः मध्ये स्थितवान् । तदा मदगजः



तत्रैव स्थित्वा शुण्डाम् उन्नीय श्रीनिवासं नमस्कृतवान् । श्रीनिवासः हस्तसाहाय्यं यच्छन् पद्मावतीम् उत्थापितवान् ।

पद्मावती वेदवतीनाम्ना पूर्वजन्मनि विष्णुम् पतिरूपेण प्राप्तुं घोरं तपः आचरन्ती आसीत् । रावणस्पर्शात् प्रक्षुब्धा सा योगाग्निं प्रज्वाल्य आत्मानम् आहुतिं दत्तवती आसीत् । अस्मिन् जन्मनि तया आकाशराजस्य पुत्रीभूय पद्मावतीनाम्ना जन्म प्राप्तम् ।

पद्मावतीश्रीनिवासयोः मध्ये परस्परानुरागः समुत्पन्नः । एतं विषयं ज्ञात्वा वकुलादेवी अरुन्धतीसहितैः सप्तर्षिभिः सह आकाशराजस्य प्रासादं गत्वा पद्मावतीश्रीनिवासयोः विवाहस्य प्रस्तावं कृतवती ।

इतःपूर्वम् एव श्रीनिवासः भविष्यकथकस्य वेषं धृत्वा पद्मावतीसमीपं गत्वा उक्तवान् आसीत् – "भवती यं परिणेतुम् इच्छति, तेन सह भवत्याः विवाहः निश्चयेन भविष्यति" इति ।

पद्मवतीश्रीनिवासयोः विवाहः सवैभवं सम्पन्नः । 'श्रीनिवासः पद्मावतीं परिणीतवान्' इत्येतां वार्तां नारदः लक्ष्मीं निवेदितवान् । एतेन कुपिता लक्ष्मीः आश्रमं प्रस्थितवती ।

आगच्छन्तीं लक्ष्मीं दूरतः एव दृष्ट्वा श्रीनिवासः पद्मावतीं तत्र एव त्यक्त्वा सप्तशिखरोपेतं शेषाद्रिम् आरूढवान् । सप्तमं शिखरं प्राप्य लक्ष्म्याः आगमनं प्रतीक्षमाणः सः तत्र स्थितवान् । लक्ष्म्याः आगमनसमनन्तरम् एव श्रीनिवासः मन्दहासं प्रकटयन् श्यामशिलारूपेण परिवृत्तः । तस्य विग्रहस्य कण्ठे दिव्या तुलसीदलमाला विराजते स्म । अस्यां मूर्तौ विष्णोः, शिवस्य, शक्त्याः च अंशाः एकीभूताः । लक्ष्मीः विग्रहस्य वक्षस्स्थले अन्तर्हिता जाता ।

भक्तानाम् अभीष्टं पूरयन् अपेक्षितरूपेण दर्शनं यच्छन् एषः श्रीनिवासः वेङ्कटरमणवेङ्कटेश्वरादिभिः नामभिः अपि ख्यातः । पद्मावती सप्तगिरेः समीपे एव 'आलुमेलुमङ्गम्मा'नाम्ना विराजमाना वर्तते । यत्र पूर्वं तपः आचरितम् आसीत्, तत्र एव लक्ष्मीः महालक्ष्मीनाम्ना निवासं कृतवती ।

भक्तानाम् आपदः क्षणमात्रेण निवारयन्, स्मरणमात्रेण सद्यः एव प्रत्यक्षीभवन्, वेङ्कटेशनाम्ना विष्णुः शेषाद्रिशिखरे वसति । 'कलियुगस्य देवता' इति जनाः एतं मानयन्ति ।





# नष्टम् अङ्गुलीयकम्

शबराणां राजा कश्चन आसीत् । तस्य गृहे सेवकद्वयम् आसीत् । एकः इल्लः, अपरः मल्लः । उभौ अपि विश्वासार्हौ । तथापि राजा इल्लम् इच्छति स्म, मल्लं द्विषति स्म ।

कदाचित् राजा उभावपि आहूय उक्तवान् – "भवद्भ्यां विरामः दत्तः अस्ति । गृहं गत्वा दिनत्रयानन्तरम् आगच्छताम् । इतः तृतीये दिने अत्र कश्चन उत्सवः प्रचलिष्यति । तद्दिने अवश्यं स्थातव्यम्" इति । एवं कथयन् सः इल्लाय लघुशिलामेकां, मल्लाय कूष्माण्डं च दत्तवान् । उभौ अपि राजानं प्रणम्य ततः प्रस्थितौ ।

राजा स्वस्मै दत्तां शिलां दृष्ट्वा इल्लः कुपितः । सः मल्लम् उक्तवान् – "मूल्यरहिताम् एतां शिलां किमर्थं गृहं नयेयम् ? अत्रैव कुत्रापि क्षिपामि" इति ।

तदा मल्लः इल्लं निवारयन् – "तथा मा करोतु । राज्ञा दत्तस्य क्षेपणं राज्ञः अपमानाय भवेत् । अहम् एतत् कूष्माण्डं भवते ददामि । आवयोः वस्तुनोः विनिमयः भवतु" इति उक्तवान् ।

तथैव उभौ अपि वस्तुनोः विनिमयं कृत्वा गृहं गतौ । इल्लः गृहे कूष्माण्डस्य पाकं कारयित्वा भुक्तवान् । मल्लः गृहे कौमुदीप्रकाशे तां शिलां परीक्षितवान् । तदा शिलायां प्रकाशमानं किञ्चन वस्तु दृष्टं तेन । सः शिलां भग्नां कृत्वा दृष्टवान् । तस्यां शिलायां महत्या बुद्धिमत्तया स्थापितं स्वर्णाभरणम् एकं प्राप्तं तेन ।

मल्लः राज्ञः पक्षपातबुद्धिं ज्ञातवान् । यद्यपि तत् आभरणं राजा इल्लाय दत्तवान्, तथापि तत् मल्लेन प्राप्तम् अभवत् । मल्लः तत् आभरणं स्वसमीपे एव स्थापितवान् ।

दिनत्रयं गतम् । तद्दिने राज्ञा मनोरञ्जन-कार्यक्रमः आयोजितः आसीत् । ततः भोजन-कार्यक्रमः अपि प्राचलत् । तस्मिन् भोजनसमये राजा सर्वान् परिशीलयन् मल्लस्य देहे स्थितम् आभरणं दृष्ट्वा आश्चर्यचकितः । सः मल्लं

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



पृष्टवान् – ''भवता कुतः प्राप्तम् एतत् आभरणम् ?'' इति ।

मल्लः प्रवृत्तं सर्वं तम् उक्तवान् । इल्लः स्वस्य मूढतां निन्दन् क्षमां याचन् विषादेन अवदत् – ''मया तस्य पाषाणस्य मूल्यम् अजानता मल्लस्य हस्ते तत् दत्तम्'' इति ।

राजा इल्लं क्षान्तवान् । किन्तु मल्लं हन्तुं निश्चितवान् । उत्सवकार्यक्रमस्य समाप्तिः जाता । सर्वे प्रस्थिताः । गमनात् पूर्वं मल्लः राजानम् उक्तवान् – ''मया एतदाभरणं स्वीकृतम् इति भवान् क्रुद्धः मा भवतु । आवाम् उभौ अपि परस्परं वस्तुनोः विनिमयं कृतवन्तौ । मया दत्तं तत् कूष्माण्डं पत्न्या सहितः इल्लः भक्षितवान्'' इति ।

''अहं भवन्तं क्षान्तवान् अस्मि । तत् प्रमाणीकर्तुम् अहं भवते एकम् अङ्गुलीयकं ददामि । एतद् अङ्गुलीयकं भवान् स्वीकृत्य आगामिनि सप्ताहे मह्यं प्रदर्शयतु । यदि एतत् अङ्गुलीयकं नष्टं भवेत् तर्हि मृत्युदण्डः स्वीकरणीयः भवेत्'' इति वदन् राजा मल्लाय अङ्गुलीयकमेकं दत्तवान् ।

मल्लः राज्ञः मनोगतम् अभिप्रायं ज्ञातवान् । अतः सः महता प्रयत्नेन अङ्गुलीयकरक्षणे विशेषावधानवान् जातः । किन्तु कुटीरे तादृशं वस्तु कथं रक्षितुं शक्येत ? अतः सः रात्रौ पत्नीपुत्रादीनां शयनानन्तरं गृहस्य भित्तौ रन्ध्रं कृत्वा तत्र तत् अङ्गुलीयकं संस्थाप्य तत् रन्ध्रं मृदा पूरितवान्, अन्येन केनापि यथा न ज्ञायेत तथा सः मृदः लेपनं कृतवान् च । प्रातः आर्द्रा मृत् शुष्का अभवत् ।

दिनद्वयानन्तरं राजा मल्लस्य पत्नीम् आनाय्य – ''भवत्याः पतिः अङ्गुलीयकं कुत्रापि संरक्षितवान् । तद् आनीय मह्यं ददातु । अहं भवत्यै प्रभूतं सुवर्णं दास्यामि । किन्तु एतं विषयं पूर्वमेव पतिं मा वदतु । यतः तावत् सुवर्णं विलोक्य सः आश्चर्यं प्रकटयेत्'' इति उक्तवान् ।

मल्लस्य पत्नी राज्ञः दुरभिप्रायं न ज्ञातवती एव । पत्युः प्राणहरणार्थमेव अङ्गुलीयकं पृच्छन् अस्ति राजा इति सा न अवगतवती । अतः सा गृहं गत्वा सर्वत्र अङ्गुलीयकान्वेषणं कृतवती । किन्तु कुत्रापि तस्य दर्शनं न अभवत् ।

सायं पत्युः आगमनस्य अनन्तरं सा तं पृष्टवती – ''भवतः समीपे किञ्चन अङ्गुलीयकं दृष्टं मया । इदानीं तत् कुत्र गतम् ?'' इति ।

मल्लेन चिन्तितं यत् पत्न्या मम अङ्गुलीयकं

कथमपि दृष्टम् इति । अतः सः ताम् अवदत् – ''तत् अङ्गुलीयकं मया भित्तौ गोपितम् अस्ति'' इति ।

परेद्यवि मल्लः कार्यार्थं बहिः निर्गतः । तं समयमेव निरीक्षमाणा पत्नी गृहस्य सर्वेषु अपि भागेषु अङ्गुलीयकस्य अन्वेषणम् आरब्धवती । कथमपि दस्य स्थानं तया ज्ञातमेव । शीघ्रमेव तत् अङ्गुलीयकं गृहीत्वा राज्ञः समीपं धावितवती सा ।

राजा तत् अङ्गुलीयकं स्वीकृत्य तस्यै लघु-स्यूतपूर्णं सुवर्णं दापितवान् । सा महता सन्तोषेण गृहम् आगत्य सुवर्णस्यूतं गृहस्य पृष्ठभागे गोपितवती ।

सप्ताहः अतीतः । राज्ञः कश्चन सेवकः आगत्य मल्लम् उक्तवान् – ''राज्ञा दत्तम् अङ्गु-लीयकं स्वीकृत्य भवता आगन्तव्यम्'' इति ।

मल्लः कुटीरे स्वेन स्थापिते स्थले अङ्गु-लीयकम् अन्विष्टवान् । किन्तु तत्र तत् न दृष्टम् । तस्मात् महत्या भीत्या सः चीत्कृतवान् – 'मम आयुः समाप्तम्' इति ।

ततः सः पत्नीम् आहूय पृष्टवान् – ''कुत्रापि अङ्गुलीयकं दृष्टं किम् ?'' इति ।

'यदि सत्यं वदेयं तर्हि एषः मां ताडयेत्' इति भीत्या सा ''न'' इति उक्तवती ।

मल्लः निराशतया 'मम प्राणाः गताः एव' इति भावयन् मन्दम् आगत्य राजानम् उक्तवान् – ''महाराज ! अङ्गुलीयकं न दृश्यते'' इति ।

तदा राजा – ''तर्हि पूर्वनिश्चितं मरणदण्डनं भवता अनुभोक्तव्यम्'' इति उक्तवान् ।

मल्लः विनयेन – ''महाराज ! मम दण्डनं एकं दिनम् अग्रे करोतु । स्वस्य दायित्वानि सर्वाणि समाप्य अहम् आगमिष्यामि'' इति उक्तवान् ।

''भवतु । श्वः प्रातः एव अहं भवतः गृहं



प्रति वधकान् प्रेषयिष्यामि'' इति राजा अवदत् ।

मल्लः महता दुःखेन गृहं प्रति प्रस्थितः । तस्य मनः चिन्ताभिः व्याकुलितम् आसीत् । तेन चिन्तितम् - 'कथमपि श्वः अहं मरणं प्राप्स्यामि । अतः अद्य अस्मात् सरोवरात् महान्तं मीनमेकं सम्पाद्य समीचीनं पाकं कारयित्वा ससन्तोषं भोक्ष्ये' इति । एवं चिन्तयन् सः जले जालं प्रसारितवान् ।

किञ्चित्कालानन्तरं श्वेतः मत्स्यः जाले पतितः । मल्लः तम् आनीय पत्नीम् आहूतवान् । किन्तु पत्नी गृहे न आसीत् । अतः स्वयमेव छुरिकया तं मत्स्यं कर्तितवान् सः । तस्य मत्स्यस्य उदरे शोभमानम् एकम् अङ्गुलीयकं तेन दृष्टम् । तत् दृष्ट्वा सः उच्चैः - ''अङ्गुलीयकं लब्धम् ! राज्ञा दत्तम् अङ्गुलीयकं लब्धम् !!'' इति सोत्साहं कथितवान् ।

मल्लः तत् अङ्गुलीयकं राज्ञे दर्शयितुं ततः धावितवान् । मार्गे यः कोऽपि दृष्टश्चेत् तस्य समीपे - ''मम आयुः गतमिति चिन्तितम् आसीत् मया । किन्तु अहम् उज्जीवितः'' इति वदन् एव राज्ञः समीपं गतः । बहवः जनाः कुतूहलेन तम् अनुसृतवन्तः ।

मल्लः जनैः सह राज्ञः समीपं गत्वा उक्तवान् - ''महाराज ! एतत् अङ्गुलीयकं स्वीकरोतु । मां मरणदण्डनात् मुक्तं करोतु'' इति ।

सर्वे आसन् इति कारणात् निरुपायः राजा मल्लं दण्डात् मुक्तम् अकरोत् । किन्तु राज्ञा एतत् न ज्ञातमेव यत् अङ्गुलीयकं पुनः मल्लस्य हस्ते कथम् आगतम् इति ।

कोऽपि महापुरुषः मल्लस्य रक्षणं कुर्वन् स्यात् इति विचिन्त्य राजा तद्दिनात् आरभ्य मल्लस्य अहितचिन्तनं त्यक्तवान् ।

वस्तुस्थितिः तु एवम् आसीत् - यदा मल्ल-पत्नी अङ्गुलीयकम् आनीतवती तदा राजा तत् पार्श्वे स्थितायाम् उत्पीठिकायां स्थापितवान् । तद्दिने रात्रौ कश्चन मूषकः तत्र आगत्य यदा उत्प्लवनम् अकरोत् तदा तत् अङ्गुलीयकं पार्श्वस्थे घटे पतितम् । अनन्तरदिने स्वच्छता-कर्ता सेवकः घटे स्थितं जलं कुल्यायां क्षिप्त्वा स्वच्छं जलं तत्र पूरितवान् । एनं विषयं राजा न ज्ञातवान् एव । अतः सः कल्पनां कर्तुं शक्तः न अभवत् यत् अङ्गुलीयकं पुनः मल्लहस्तं कथं प्रतिगतम् इति ।



भारतस्य अज्ञातप्रायं वैशिष्ट्यम्

# चेट्टिनाडुपरम्परा

दक्षिणभारते चेट्टियारजनानां वसतिभवनं 'नट्टूकोटायी' (स्थानीयं दुर्गम्) इति निर्दिश्यते । एतानि भवनानि अतिविशालानि भवन्ति । सामान्याः जनाः तस्य दर्शनात् वदन्ति यत् दुर्गम् एव एतत् इति । सहस्राधिकैः वातायनैः युक्तस्य भवनस्य कल्पना किं भवद्भिः कर्तुं शक्या ? तादृशम् अपूर्वं भवनं कारैक्कुडीप्रदेशे द्रष्टुं शक्यम् । एतत् पूर्वं चेट्टिनाडजनानां राजधानी आसीत् । तमिळुनाडुराज्ये आसीत् एतत् । १९१२ तमे वर्षे निर्मितम् एतत् । एतस्य निर्माणावसरे इटलीदेशीयानि कुट्टिमफलकानि बर्मदिशीयानि काष्ठानि च उपयुक्तानि । स्थानीयप्रतिभायाः प्रोत्साहनम् अपि निर्माणावसरे कृतम् एव । इतः अनतिदूरे अतनुगुडिग्रामे सिकता-सिमेण्ट्-जल-रङ्गद्रव्याणां मिश्रणेन सज्जीकृतानि कुट्टिमफलकानि अपि अत्र उपयुक्तानि । अतः एतादृशैः कुट्टिमफलकैः युक्ते स्थले सञ्चारात् परमशीतलता अनुभूयते । द्वाराणि अपि एतादृशम् एव शीतलानुभवं प्रापयन्ति । अण्डावरणानि, अण्डस्थः श्वेतद्रवः, सुधा, गुडः, अन्यविधानि कानिचन द्रव्याणि च मिश्रीकृत्य संयोजनद्रव्यं सज्जीकृत्य एतानि योजितानि । भवनस्य केन्द्रस्थले अङ्गणभागः अस्ति, येन च वायुसञ्चारः सर्वत्र सुगमः जातः अस्ति । काष्ठमयेषु द्वारबन्धेषु सूक्ष्माणि शिल्पानि चित्रितानि सन्ति ।

उन्नतिशीलः चेट्टीयार्समुदायः वस्तुवाणिज्यं कुसीदवाणिज्यं च करोति स्म । निष्कपटव्यवहारेण कार्यश्रद्धया च तेन अपूर्वा कीर्तिः सम्पादिता ।

नट्टूकोटायीभवनानि यानि निर्मितानि तेषां कारणतः अपि तैः कीर्तिः आसादिता अस्ति ।

एतेषां चेट्टिनाडपरम्परायाः च विविधानि वैशिष्ट्यानि एषु दिनेषु प्रदर्शितानि जर्मन्यां प्रवृत्ते अन्ताराष्ट्रिये सम्मेलने । एतस्य प्रदर्शनस्य कारणतः तमिळुनाडुपर्यटनविभागः पुरस्कृतः जातः ।



# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

शान्तिपुरस्य सिंहासनं स्वायत्तीकृतवान् वीरसिंहः स्वस्य सर्वेषां प्रयत्नानां व्यर्थतां दृष्ट्वा खिन्नः । कनकदुर्गायाः स्वर्णप्रतिमां स्वायत्तीकर्तुं गतः सः असाफल्यं प्राप्तवान् । सः राजकुमारीं सुकन्यां परिणेतुम् ऐच्छत् । किन्तु तत्रापि विघ्नः समुपस्थितः । राजकुमारीं रक्षितवान् आर्यः एव इति ज्ञातवान् सः नितरां क्रुद्धः । राजविरोधिनां नायकः वसन्तः मार्गदर्शनप्राप्त्यर्थं जयानन्दसमीपं गच्छति ।

चित्रम् - गान्धि-अय्यः


शान्तिपुरे वीरसिंहस्य निद्रा सर्वथा विनष्टा अस्ति ।
राजकुमारः आर्यः कः स्यात् ? शान्तिदेवः तु न जीवति । तस्य पत्नी पुत्रः च कुत्र स्तः इति न ज्ञायते । सः कः स्यात् ?


एकस्मिन् प्रातःकाले
महाराज ! प्रधानगुप्तचरः उपस्थितः अस्ति ।
तम् अन्तः प्रवेशय ।


राजकुमारः आर्यः कः इति किं भवता ज्ञातम् ?
तत्तु न ज्ञायते । मया अन्या एव वार्ता आनीता अस्ति ।


प्राचीननिधि-स्थलस्य अवशेषाणां मध्ये केचन भिक्षवः दृष्टाः मया । ते विद्रोहिणः इव न भान्ति । तथापि ...
ते के स्युः एवं तर्हि ?


ते वदन्ति यत् वयं शरणस्थलस्य अन्वेषणं कुर्वन्तः स्मः इति । ते प्रतिदिनम् अपि तत्र आगच्छन्ति ।
ते निर्दोषाः स्युः अपि । तथापि तेषु विशेषदृष्टिस्थापनं श्रेयसे ।


शीघ्रं गत्वा सेनापतिं वदतु यत् अविलम्बेन आगन्तव्यम् इति ।
अस्तु महाराज !


जब्बरसिंह ! वयं प्राचीन-निधिस्थलस्य परिशीलनं कदापि न कृतवन्तः एव ।
किम् अद्य रात्रौ आवां तत्र गच्छाव ?


रात्रौ घोरान्धकारे उभौ अश्वौ पश्चिमायां दिशि वेगेन गच्छन्तौ दृश्येते ।


वीरसिंहः जब्बरसिंहः च अवशेषाणां मध्ये सर्वत्र सञ्चरतः । पृष्ठभागे ताभ्यां कीलितः कश्चन प्रकोष्ठः दृश्यते ।
जब्बरसिंह ! किम् एषः तालः उद्घाटयितुं शक्येत ?
अहं प्रयत्नं करिष्यामि महाराज !


जब्बरसिंहः तालं भञ्जयति । रिक्तः प्रकोष्ठः, तत्र रिक्ताः पेटिकाः च ताभ्यां दृश्यते ।
किमपि नास्ति अत्र महाराज !


निकटस्थे प्रकोष्ठे स्थितः अपारः धनराशिः ताभ्यां दृश्यते अर्धोद्घाटितात् वातायनात् आगते प्रकाशे ।
एतानि अमूल्यानि रत्नानि महाराज ! एतस्य उपयोगेन वयं सैन्यस्य निमित्तम् आयुधानि क्रेतुं शक्नुयाम ।
अहो, सुवर्णरजतादीनि ! तत्र दृश्यन्ते स्वर्णमुद्राः !


अकस्मात् प्रकोष्ठः भीतिजनकः इव अभासत ।
भूतः ! प्रायः शान्तिदेवः स्यात् ।
सर्वे शान्तिदेवस्य नाम जपन्ति ! भवान् अस्ति भीरुः ।


इदानीम् आवाम् इतः गच्छाव । धनस्य सुरक्षा कथम् इति चिन्तनीयम् ।
अस्माभिः अत्र रक्षणाय उभौ भटौ नियोक्तव्यौ ।


रात्रौ एव गच्छाव इति भवता एव सूचितम् आसीत् ।
तत् तु सत्यम् किन्तु ... पिशाचस्य आकारः मनस्तः न अपगच्छति ।
अनुवर्तते

मानवनिर्मितं महाद्भुतम्

# ताजमहल्



अस्माकं देशे स्थितेषु महाश्चर्यकरेषु भवनेषु ताजमहल् अपि अन्यतमम् । जागतिकस्तरे अपि आश्चर्यकरेषु अन्यतमत्वेन एतस्य परिगणनं कृतमस्ति ।

पूर्वं देहली सम्राजां वासस्थानम् आसीत् । अकबरशासनकाले आगरा तत् स्थानं प्राप्नोत् । तदनन्तरकाले तस्य पौत्री शाहजहानस्य पत्नी मुमताजमहल् १६३१ तमे वर्षे स्वस्य मरणकाले शाहजहानस्य पुरतः इच्छां प्रकटितवती यत् भवता अन्या न परिणेतव्या, मम नाम अमरं कर्तुं कोऽपि उपायः चिन्तनीयः च इति । शाहजहानः तस्यः उभे अपि इच्छे पूरितवान् । अन्या तेन न परिणीता । पत्न्याः स्मरणाय सः अपूर्वं ताजमहल् निर्मितवान् च ।

एतद्विषये प्राचीने पर्शियन्ग्रन्थे कस्मिंश्चित् एका कथा एवं हि श्रूयते - ''ताजमहल्निर्माणावसरे स्वस्य कल्पनायाः अनुगुणं भवनस्य रूपरेखां निर्मातुं योग्यस्य जनस्य अन्वेषणं कारितवान् शाहजहानः । अन्ते कश्चन तपस्वी प्राप्तः । तस्य मार्गदर्शनस्य अनुगुणं कस्मैचित् शिल्पिने कोऽपि सस्यरसः दत्तः पानाय । सः शिल्पी ताजमहल्रूपरेखां निर्माय मूर्च्छां गतः ।''

एतस्य भवनस्य निर्माणं २२ वर्षाणि यावत् प्रवृत्तम् । असंख्याः जनाः एतत् कार्यं कृतवन्तः । त्रिकोटिः रूप्यकाणि एतदर्थं व्ययितानि । १६५३ तमे वर्षे एतस्य निर्माणं समाप्तम् । १६६६ तमे वर्षे शाहजहानः दिवंगतः । तस्य स्मारकमपि तत्पत्न्याः स्मारकस्य पार्श्वे एव निर्मितम् ।

ताजमहल् श्वेतया सङ्गमरमरशिलया निर्मितम् अस्ति । एतस्य विस्तारः १३० पादमितः । औन्नत्यं च २०० पादमितम् । यमुनानद्याः तीरे अस्ति एतत् । एतत् परितः हरिन्मयम् उद्यानम् अस्ति । कौमुदीप्रकाशे दृश्यमानम् अस्य अपूर्वसौन्दर्यं तु वर्णनातीतम् ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थं विज्ञानम्

### शुक्तिचित्राणि

नवदशे शतके ततः पूर्वं वा महानौकाः यन्त्रचालिताः न भवन्ति स्म । अतः उद्दिष्टस्य स्थानस्य प्राप्त्यर्थं नाविकैः वायुगतिः अवलम्बनीया भवति स्म । अनुकूलस्य वायोः प्रतीक्षां कुर्वद्भिः तैः नौकायां विना कार्यं स्थातव्यं भवति स्म ।

तदवसरे उत्पद्यमानां नीरसतां निवारयितुं ते नाविकाः शुक्तीः चित्वा तासाम् उपरि चित्राणि निर्मान्ति स्म । एषा एव 'शुक्तिचित्रकला' (स्किम्शा) इति ख्याता जाता ।

शुक्तौ चित्रनिर्माणाय अनेकानि सोपानानि अनुसरणीयानि भवन्ति । आदौ शुक्तिः दर्पणवत् यथा शोभेत तथा परिष्कारः करणीयः । ततः तीक्ष्णया छुरिकया सूच्या वा शुक्तेः उपरि चित्ररेखाः रचनीयाः । एतेषु रेखागर्तेषु विविधवर्णमय्यः मष्यः अपेक्षानुगुणं योजनीयाः । अन्ते अनपेक्षिते भागे स्थिता मषी मार्जनीया ।




शुक्तिचित्राणि ऐतिहासिकं महत्त्वं वहन्ति । नौकाप्रयाणजीवनविषये तानि बहूनि विवरणानि प्रयच्छन्ति ।

शुक्तिषु चित्रनिर्माणे यः कुशलः भवति सः निर्दिश्यते 'शुक्तिकलाकारः' इति ।

## भवतां परिसरः

### जीवी कश्चन चतुर्भिः युक्तः



'पोर्चुगीस् योद्धा' इत्यस्य श्रवणात् भवन्तः कञ्चित् योद्धारं नौकां वा स्मरेयुः खलु । एवं तर्हि तेन शब्देन वञ्चिताः भवन्तः । स च न हि योद्धारं नौकां वा अभिधत्ते, प्रत्युत अभिधत्ते कञ्चित् समुद्रजीविनम् । सः घोरः समुद्रजीवी उष्णसमुद्रेषु जीवति ।

अयं जेल्लीमत्स्यकुटुम्बीयः । विज्ञानिनः अभिप्रयन्ति यत् अयम् एकः जीवी न, प्रत्युत चतुर्णां लघुदण्डाकाराणां जीविनां समूहः इति । एते दण्डाकारकाः जीविनः कोलण्टरेट्जीविसमूहीयाः । एतेषां शरीरस्य मुखभागः शराववत्, शरीरभागः रज्जुवत् च भवति ।

पृष्ठास्थिहीनः अयं जीवी समुद्रे प्लवमानः दृश्यते । समुद्रस्य ऊर्ध्वतले एव एतस्य सञ्चारः । वायुग्रहणाय अयं स्वशरीराकृतिं पौनःपुन्येन परिवर्तयति अपि ।

अयं नीलवर्णीयैः रज्जुवत् स्थितैः स्वीयैः शरीरभागैः खाद्यानि शत्रून् वा गृह्णाति ।

यदि एषः दशेत् तर्हि मोदोजनकग्रन्थौ दहनभावः शोथः वा भवेत् । कदाचित् ततः श्वासोच्छ्वासे क्लेशः अपि उत्पद्येत । क्वचित् हृदयस्तम्भनम् अपि सम्भवेत् ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### अन्ताराष्ट्रियपुस्तकसङ्ख्या

प्रसिद्धैः प्रकाशकैः प्रकाशितं पुस्तकं यदि दृश्येत तर्हि तस्य पृष्ठभागे काचित् सङ्ख्या दृश्यते ISBN - 80-60001-33-4 इत्येतादृशी । एषा सङ्ख्या एव तस्य पुस्तकस्य सङ्केतायते इति किं भवन्तः जानन्ति ?

ऐ.एस्.बि.एन्. इत्यस्य पदस्य अर्थः - 'अन्ताराष्ट्रियस्तरीया पुस्तकसङ्ख्या' (इण्टर्नेषनल् स्टेण्डई बुक् नम्बरिङ्ग्) इति । एतत् नाम एव तस्य अर्थं स्पष्टतया विवृणोति । अन्ताराष्ट्रियस्तरे पुस्तकस्य अभिज्ञानाय एषा सङ्ख्या उपयुज्यते ।

यदा कश्चन प्रकाशकः किञ्चन पुस्तकं प्रकाशयति तदा सः निश्चितां सङ्ख्यां तस्मिन् पुस्तके मुद्रयति । एषा सङ्ख्या अन्यस्मिन् पुस्तके मुद्रिता न भवति । दशभिः अङ्कैः उपेता भवति एषा सङ्ख्या ।

एतस्याः प्रथमः भागः देशं सङ्केतयति । द्वितीयः भागः प्रकाशकसंस्थासम्बद्धः । तृतीयः भागः पुस्तकस्य शिरोनाम निर्दिशति । चतुर्थश्च भागः प्रकाशितपुस्तकसङ्ख्यां सङ्केतयति ।




## अभिवर्ध्यतां ज्ञानशक्तिः

एतस्मिन् मासे वयं स्वातन्त्र्यसङ्ग्राम-सम्बद्धान् कांश्चन अंशान् परिशीलयाम तावत् ।



1. जनवरीमासस्य २६ तमः दिनाङ्कः कथं गणतन्त्र-दिनत्वेन चितः ?

2. ब्रिटिश्संसत्सभया कदा भारतस्वातन्त्र्यविधिः पारितः ?

3. मुम्बयीनगरे 'रायल् इण्डियन् नेवी' इत्यत्र प्रवृत्तः विरोधः भारते आंग्लसर्वकारम् अकम्पयत् इति श्रूयते । एषा घटना कदा प्रवृत्ता ?

4. ऐदम्प्राथम्येन कदा मुस्लिम्जनः कश्चन कांग्रेस्संस्थायाः अध्यक्षः आसीत् ? सः च कः ?



5. स्वातन्त्र्यसङ्ग्रामस्य का घटना विजयसाधिका आसीत्, यां च दृष्ट्वा इर्विनः उक्तवान् यत् 'चाय-चषके झञ्झावातः' इति ?

*(उत्तराणि ७० तमे पृष्ठे)*

# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



MAHANTESH C. MORABAD



SPHOORTHY REDDY V.H.

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'जून्'मासस्य शीर्षिकाप्रेषकः -

**वि.के. सत्यनारायणः**

गृ.सं - एल्.ऐ.जि. II - २५

ए.पि.एच्.बि. कालोनी,

**पालकोल्लु - ५३४२६० (आ.प्र.)**

पुरस्कृता शीर्षिका





**स्वेच्छारहिता चिन्तायुक्ता ।**
**स्वच्छानन्दे स्वतन्त्रवर्गः ।।**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. १९५० तमे वर्षे जनवरीमासे २६तमे दिनाङ्के भारतीयं संविधानं व्यवहारपथम् आगतम् ।

२. १९४७ तमे वर्षे जुलैमासस्य १८ दिनाङ्के ।

३. १९४६ तमे वर्षे फेब्रवरीमासे ।

४. बद्रुद्दीन् तियाब्जी - मद्रास्-अधिवेशने १८८७ तमे वर्षे ।

५. १९३० तमे वर्षे प्रवृत्ता दाण्डीयात्रा ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# तैलम् अमूल्यम्




वीणायाः पाठ्यपुस्तके पेट्रोलियम् उपयोगम् अधिकृत्य कश्चन अध्यायः आसीत् । विषयस्य अवगमनं सम्यक् भवतु इति उद्देशेन विज्ञानाध्यापकः तैलशुद्धीकरण-यन्त्रागारस्य प्रमुखं दासवर्यं कक्ष्यां प्रति निमन्त्रितवान् आसीत् । दासवर्यः स्वभाषणे अवदत् – ''शक्तिः (एनर्जी) इति पदं वयं प्रतिदिनं पौनःपुन्येन शृणुमः एव । शक्तेः ऋते मानवः क्षणमपि जीवितुं न अर्हति । अस्माकं शरीरस्य वृद्धौ अपि एषा नितराम् उपकरोति । शक्तिमूलानि सन्ति बहूनि । तेषु प्रमुखम् अस्ति तैलम् । भूमौ खननात् एतत् तैलं प्राप्यते ।''

''तत्र कथं तैलसङ्ग्रहः जातः ?'' इति अपृच्छत् राहुलः ।

मन्दहासं प्रकटयन् दासवर्यः अवदत् – ''कोट्यधिकवर्षेभ्यः पूर्वम् एतस्यां भूमौ सस्यानि प्राणिनः च आसन् । तेषां मरणस्य अनन्तरं तेषाम् अवशेषाः मृत्तिकाधीनाः जाताः । वर्षाणि अतीतानि । पङ्कपटलाः शिलाफलकानि च भूमौ निर्मितानि । औष्ण्यस्य भारस्य च कारणतः अपरिष्कृतः तैलांशः तत्र निर्मितः सङ्गृहीतः च जातः । ततः एव अस्माभिः तैलं प्राप्यते अद्य'' इति ।

''कथं तैलं भूमितः निष्कास्यते ?'' इति अपृच्छत् वीणा ।

''भूमेः ऊर्ध्वतले स्थिताः तैलसङ्ग्रहाः आदौ उपयुक्ताः मानवेन । गच्छता कालेन तेन ज्ञातं यत् भूमेः अधोभागे शिलाफलकादीनां मध्ये महान् तैलसङ्ग्रहः अनिलसङ्ग्रहः च अस्ति इति । रन्ध्रकूपादीनां साहाय्येन स च तैलसङ्ग्रहः उपयुज्यमानः अस्ति अद्य । दौर्भाग्यस्य विषयः नाम भारते एतादृशः सङ्ग्रहः अत्यल्पप्रमाणेन अस्ति । अतः वयं सौदी-अरेबियाप्रभृतीनि तैलराष्ट्राणि अवलम्बामहे तैलनिमित्तम् । एवं तैलम् अस्ति अमूल्यम् । तस्य व्यर्थता न शोभते सर्वथा । एवं ननु ?''

''आम् । तैलव्यर्थतां निवारयामः वयं यथाशक्ति'' इति अवदन् सर्वे छात्राः ।

Regd. No. TN/PMG(CCR)-389/03-05
Regd. with Registrar of Newspaper for India No. 42664/85
Licensed to post without prepayment No. 371/03-05 Foreign - WPP. No. 372/03-05